अनन्तशयनविश्वविद्यालयः

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १७४

श्रीनारायणभट्टप्रणीतं

# प्रक्रियासर्वस्वम्

(चतुर्थो भागः)




राजकीयमुद्रणयन्त्र।.

१९५४/११३०

मूल्यं रूप्यकत्रयम्

# PREFACE

This is the fourth part of Prakriyā Sarvasva, a work on Sanskrit grammar by Melputtūr Ñārāyaṇa Bhaṭṭatiri, the celebrated Sanskrit poet and grammarian who flourished in Kerala in the 17th century A. D. Parts I to III of this work were issued from this institution as Nos. 106, 139 and 153. Part IV is now issued as No. 174, and this completes the *Subanta* portion of Prakriyā Sarvasva.

As enough has been said about the biographical details of the author and his literary works in the introductions and prefatory notes of the previous parts, it is needless to make any attempt in that direction here.

The remaining portions of the work are also under scrutiny, and they will be published in due course.

Trivandrum,
10-12-1954.

SURANAD KUNJAN PILLAI,
*Honorary Director*

—

# निवेदना।

विंशत्या खण्डैः सम्पुटितस्य श्रीनारायणभट्टप्रणीतस्य पाणिनिसूत्रवृत्तेः प्रक्रियासर्वस्वस्य तुरीयोऽयं भागोऽनन्तशयनग्रन्थावल्यां '७४ तमाङ्कतये-दानीं प्रकाश्यते। संज्ञादितद्धितान्ताः प्रथमे पञ्च खण्डाः यथाक्रमं १०६, १३९, १५३ तमाङ्कैस्त्रिभिर्भागैरितः पूर्वमस्यामेव ग्रन्थावल्यां प्रकाशिताः। अस्मिंश्च तुरीये भागे पूर्वप्रकाशितेभ्यः परे समासादिसुब्विध्यवधिकाश्चत्वारः खण्डाः समाहृताः। तत्रादिमे समासखण्डे अव्ययीभावादिसमासाः, समासान्तप्रत्ययाः, समासाश्रयविधयः; द्वितीये स्त्रीप्रत्ययखण्डे टाबादीनां षण्णां स्त्रीप्रत्ययानां विधिः, तृतीये सुबर्थखण्डे प्रथमादिसप्तविभक्त्यर्थाः; चतुर्थे स्वादिसप्तविभक्तिप्रत्ययाः द्विरुक्तप्रक्रिया च निरूप्यन्ते। एतावता प्रकरणेन सम्पूर्णा सुबन्तप्रक्रिया।

सूत्राणां स्मृतग्रन्थादीनां च काचिदनुक्रमणिका सौकर्यायान्ते समायोजिता।

ग्रन्थकर्तुर्जीवितचरित्रादिकं पूर्वस्मिन् सम्पुट एव प्रकाशितमिति नात्र पल्लव्यते।

एतद्ग्रन्थप्रसाधनोपयुक्ता आदर्शाः —

पन्तलराजस्वामिकः C २०६ इत्यङ्कितस्तालपत्रात्मकः। एण्णक्काट् वलियराजस्वामिकः C १९२१ इत्याङ्कितस्तालपत्रात्मकः। चीरक्काट् केशवन् ईश्वरन् नम्पूतिरिस्वामिकः C ४१२१ इत्यङ्कितस्तालपत्रात्मकः। अनन्तशयनस्थहस्तलिखितग्रन्थशालायाः ५०९४, ११०७०, १२८० इत्यङ्किताः तालपत्रात्मकाः।

अनुक्रमण्यादिसज्जीकरणे मुद्रितपत्रसंशोधने च साह्यमाचरितवद्भ्यः श्री० शङ्कररामशास्त्रि, माधवनुण्णिशास्त्रिवर्येभ्यो महतीं कृतज्ञतां धारयन् ग्रन्थमिममवतारयामि।

अनन्तशयनम्,
१९५४.

के. एस्. महादेवशास्त्री
*Curator.*

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| ति च मुदं | ति मुदं | ५ | १६ |
| गौरतः | गौरकः | ६ | ११ |
| ग्रन्थः | ग्रन्थः | ७ | ५ |
| मेहः कृमि | मेहकृमि | ८ | २२ |
| चैषत्पित्त | चेषत्पित्त | १७ | १८ |
| मुत्तम | मुत्तमं | २१ | ६ |
| कफछिदः | कफच्छिदः | २२ | १८ |
| द्विजैच्छिन्नान् | द्विजैश्छिन्नान् | २४ | ५ |
| तेऽखिल | तेऽखिला | २५ | २१ |
| लोदनः | लोदना | २६ | ७ |
| लांस्फीतान् | लान् स्फीतान् | ,, | १७ |
| आघ्यान | आध्मान | २७ | ४ |
| भ्रमछर्दि | भ्रमच्छर्दि | ,, | ९ |
| संशुद्धः व्रण | संशुद्धौ व्रण | ३१ | २० |
| ाविदल | विदल | ३२ | १० |
| शर्करां पयसि | शर्करापयसि | ३४ | ११ |
| सिद्धासमरिचा | ासिद्धा समरिचा | ४० | २४ |
| वेलयेद्वेल | वेल्लयेद्वेल | ४४ | ७ |
| धान्या निशा | धान्यानिशा | ५२ | २ |
| मण्डो सिक्थः | मण्डः सिक्थः | ५७ | २३ |
| शाकापत्या | शाकापत्त्या | ५८ | १६ |
| मुण्णं | मुष्णं | ५९ | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| मूल | मूलः | ५९ | १० |
| कटुरुष्णश्च | कटुरुष्णश्च | ६१ | २१ |
| विष्टंभश्लेष्मंकारिणी | विष्टम्भश्लेष्मकारिणी | ६७ | ६ |
| दोपघ्नी | दोषघ्नी | ६८ | २१ |
| तन्त्राभिष्यन्द | तन्द्राभिष्यन्द | १०२ | २७ |
| वृष्थं | वृष्यं | १०४ | २५ |
| संभरदेशे | सभरदेशे | ११६ | २५ |
| सुगन्धिदम् | सुगन्धदम् | १२१ | ३ |
| काया फलं | कायाः फलं | १२२ | २० |
| मत्यम्ल | मत्यम्लं | १३९ | २६ |
| जिद्रचिकरो | जिद्रुचिकरो | १५९ | ५ |
| तामिरुत्पादितं | ताभिरुत्पादितं | १६५ | २१ |
| स्याच्छूवेतं | स्याच्छ्वेतं | १६६ | ८ |
| पृष्टे | पृष्ठे | १७३ | १८ |
| स्याच्छेष्मलो | स्याच्छ्लेष्मलो | १७५ | १३ |
| मृण्मये | मृन्मये | १७७ | १८ |
| ,, | ,, | १७८ | ३ |
| शैशर्य | शैशिर्य | १८४ | १० |
| उद्राव्यते | उद्द्राव्यते | १८६ | ४ |
| निहन्सि | निहन्ति | २०९ | १३ |
| मंद्यं | मद्यं | २१० | ८ |
| सुषेणात्कः | सुषेणोक्तः | २२१ | १९ |
| पुष्टि च | पुष्टिं च | २२५ | १७ |
| विंष्णु | विष्णु | २२६ | २३ |
| कफवातोनुलापनम् | कफवातानुलोमनम् | २२९ | ५ |
| निर्मायि | निरमायि | ,, | १६ |

# विषयानुक्रमणी ।

॥ श्रीः ॥

श्रीनारायणभट्टप्रणीतं

# प्रक्रियासर्वस्वम् ।

(चतुर्थो भागः)

---

**अथ समासाः—**

प्राक्कडारात्समासः (२. १. ३)

'कडाराः कर्मधारये' (२. २. ३८) इत्यतः प्राग्भवाः समासाख्याः ॥

सह सुपा (२. १. ४)

सुबन्तं सुबन्तेन सह समस्यत इति सर्वत्र ज्ञेयम् । स च समासश्चतुर्धा । पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः; द्विगुः कर्मधारयश्च तस्यैव भेदौ, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्व इति ॥

अव्ययीभावः (२. १. ५)

इतः परमुच्यमानः समास एतत्संज्ञः ॥

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु (२. १. ६)

विभक्त्यादिष्वर्थेषु स्थितमव्ययं सुबन्तं समर्थेन सुबन्तेन सह नित्यं समस्यते, स समासोऽव्ययीभावसंज्ञः। विभक्तिरिति सप्तम्यर्थो विवक्षित इति नीवीकारः ॥

अत्र हरावधिकृत्येति विग्रहे हरि ङि अधि सु,

प्रथमानिर्दिष्टं समास उपसर्जनम् (१. २. ४३)

समाससूत्रे प्रथमान्तेन पदेनोक्तमुपसर्जनसंज्ञम् । तस्मादव्ययमिति प्रथमान्ततयोक्तमत्रोपसर्जनम् । तच्च 'उपसर्जनं पूर्वम्'(२.२.३०) इति पूर्वं प्रयोज्यम् ॥

अधि सु हरि ङि । समासत्वेन प्रातिपदिकत्वात् 'सुपो धातु--'(२. ४. ७१) इति सुब्लुक् । अधि हरि । प्रातिपदिकत्वात् पुनः सुबुत्पत्तौ सप्तम्यर्थस्य समासेनोक्तत्वात् सामान्योक्तः सुः । अधिहरि सु,

अव्ययीभावश्च (१. १. ४१)

असावप्यव्ययाख्यः । इत्यव्ययत्वात् सुलुक् । अधिहरि प्रवृत्ताः कथाः । 'परिप्रती अपि सप्तम्यर्थावि'ति माधवः । परिमौलि प्रतिमौलि वा चिन्छम् । अनुहरि वृत्तमित्यनुरपि सप्तम्यर्थे दृष्टः ॥

एवं नद्यामधीत्यत्र समासे सुब्लोपे च कृते अधिनदी,

अव्ययीभावश्च (२. ४. १८)

असौ क्लीबं स्यात् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य'(१. २. ४७) इत्यन्त्यस्य ह्रस्वः । सौ कृते लुक् । अधिनदि मज्जति । 'समर्थः--' (२. १. १) इत्युक्तेर्ग्राहोऽस्ति नद्याम्, अधिरोह त्वमित्यत्र नद्यामधीत्यनयोरनन्वयादसमासः ॥

कृष्णस्य समीपमित्यर्थे कृष्ण ङस् उप सु । सुबुत्पत्त्यन्तं प्राग्वत् । उपकृष्ण सु, अव्ययत्वात् सुब्लुकि प्राप्ते,

---

१. 'क्तमव्ययम' ख. छ. ज. पाठः.

### नाव्ययीभावादतोऽम् त्वपञ्चम्याः (२. ४. ८३)

अदन्तादव्ययीभावात् सुपो लुङ् नास्ति किं पुनः।
पञ्चमीवर्जितानां तु सुपामम्भाव इष्यते॥

उपकृष्ण अम्,

### अमि पूर्वः (६. १. १०७)

अकोऽमि विभक्तौ परतः पूर्वरूपमेव स्यात्। उपकृष्णं रम्यम्। उपकृष्णं पश्य। पञ्चम्यां तु उपकृष्णादागतः॥

### तृतीयासप्तम्योर्बहुलम् (२. ४. ८४)

अदन्तादुक्तोऽयमम्भावः तृतीयासप्तम्योर्बहुलं स्यात्। उपकृष्णमुपकृष्णेन वा चरति गधा। उपकृष्णमुपकृष्णे वा तिष्ठति। अकजाद्यव्ययकार्यमव्ययीभावस्य न। उपाग्निकमिति क एव। एवमुपहरिम्मन्यः उपहरीभवति उपकृष्णीभूत इत्यादावव्ययस्योक्तो मुमादिनिषेधो न। समृद्धौ--सुभूमि, सुभूत्यम्। ऋद्ध्यभावो व्यृद्धिः। दुर्भूमि वर्तते। अर्थाभावोऽत्यन्ताभावः। प्रत्यूहस्यात्यन्ताभावो निष्प्रत्यूहमस्तु॥

### नलोपो नञः (६. ३. ७३)

उत्तरपदे परे नञो नलोपः स्यात्। अविघ्नम्। प्रागिव्यमानस्य पुनर्नाशोऽत्ययः। निर्हिमं वर्तते। निवातम्। वस्तूनामुपभोगकाङ्क्षनिवृत्तिरसम्प्रति। अतिच्छत्रमभूद् दिनान्ते। शब्दप्रादुर्भावो नाम्नः प्रसिद्धिः। इतिरामं तत्कृष्णं चाभूत्। पश्चादर्थे--अनुशौरि गच्छति। यथेत्यनेन योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति यथार्था उक्ताः। तेषु स्थितमव्ययं समस्यते। योग्यतायाम्—अनुजाति वृत्तिः। वीप्सायां—प्रतिगोपि कृष्णो दृश्यते। अनुगोपि। यावच्चाह माधवः। यावद्गोपि। पदार्थानतिवृत्तौ--शक्तिमनतिक्रम्य यथाशक्ति। सादृश्ये[1] सहशब्दोऽस्ति॥

---

१. 'श्यार्थे स' क. पाठः

## अव्ययीभावे चाकाले (६. ३. ८१)

अकाल उत्तरपदेऽव्ययीभावे सहस्य सः स्यात् । सकृष्णमस्ति पार्थस्य । तत्सादृश्यमित्यर्थः । अथानुपूर्व्ये—अनुज्येष्ठं यान्ति । यौगपद्ये—आशा युगपज्जयति साशं जयति । सादृश्यमत्र सदृशपरम् । सकृष्णं पार्थः । अनुरूपं तथात्वं सम्पत्तिः । अनुरूपं क्षत्त्रियत्वं सक्षत्त्रियम् । साकल्ये—तृणमप्यनूनमत्ति । सतृणमत्ति । अन्तवचने—क्रमपर्यन्तं सक्रममधीते । सर्वत्र अव्ययीभावे चाकाले इति सहस्य सः । अकाल इत्युक्तेः सहमध्याह्नमधीत इत्यत्र सत्वं न । मध्याह्नान्तमित्यर्थः ॥

## यथासादृश्ये (२. १. ७)

उक्तः समासोऽव्ययाना यथार्थेषु चतुर्ष्वपि ।
यथेत्यस्य तु सादृश्यवर्जितेष्वेव तद्विधिः ॥

यथाशक्तीत्यादि । सादृश्ये—मेघो यथा भाति हरिः । क्वचित् सादृश्येऽपि स्यादिति केचित् । यथापुरम् । पुरेवेत्यर्थः ॥

## यावदवधारणे (२. १. ८)

यावदित्येतदवधारणेऽर्थे सुपा नित्यं समस्यते । यावदिच्छं देहि । यावतीच्छा तावदेवेत्यर्थः ॥

## सुप् प्रतिना मात्रार्थे (२. १. ९)

सुबन्तमल्पार्थे प्रतिना समस्यते । अल्पमन्नम् अन्नप्रति ॥

## अक्षशलाकासंख्याः परिणा (२. १. १०)

एते द्यूतविशेषे जयपरिवृत्तावर्थे परिणा समस्यन्ते । एकेनाक्षेण जयविपर्ययोऽक्षपरि । एवमेव शलाकापरि । एकपरि द्विपरि । त्रिपरि चतुष्परि ।

पञ्चाक्षद्यूतके सर्वस्यैकरूप्ये जयो भवेत् ।
एकद्व्याद्यन्यथात्वे तु समासोऽयं विधीयते ॥

विभाषा (२. १. ११)

अतः परं समासा विकल्पिताः स्युः ॥

अपपरिबहिरञ्चवः पञ्चम्या (२. १. १२)

अपादयः पञ्चम्यन्तेन वा समस्यन्ते । अपादियोगे पञ्चमी वक्ष्यते । अप सु ग्राम ङसि, 'सुपो धातु—' (२.४.७१)इति सुपो लुकि पुनरुत्पन्नस्य सोऽम्भावः । अपग्रामं सेना याति । परिग्रामम् । वर्जयित्वेत्यर्थः । एवं बहिर्वनम् । प्राक्पुरम् । असमासे ग्रामादप ग्रामात् परीत्यादि ॥

आङ् मर्यादाभिविध्योः ( २. १. १३)

अनयोरर्थयोराङ् पञ्चम्या वा समस्यते । आसमुद्रं क्षितिः । आकोलं केरलाः । असमासे तु आ समुद्रात् । आ कोलेभ्यः ॥

लक्षणेनाभिप्रती आभिमुख्ये (२. १. १४)

आभिमुख्यार्थावभिप्रती चिह्नवाचिना वा समस्येते । अभ्यग्नि शलभाः पतन्ति । प्रत्यग्नि । शलभपातः कुत्रेति पृष्टेऽग्निं चिह्नतया प्रदर्श्य तदाभिमुख्येन पतन्तीति ब्रूते । असमासेऽग्निमभि, अग्निं प्रति ॥

अनुर्यत्समया (२. १. १५ )

अनुर्यस्य समीपवाची तेन चिह्नभूतेन वा समस्यते । अनुवनमशनिर्गतः । वनमनु ॥

यस्य चायामः (२. १. १६)

अनुर्यस्य दैर्घ्यवाची तेन लक्षणेन वा समस्यते । अनुगङ्गं काशी । काशीवीथी गङ्गावत् प्रागायतेत्यर्थः । गङ्गादैर्घ्यमत्र काशीदैर्घ्यस्य लक्षणतयोच्यते । अनुगङ्गं सूत्रम् । तद्वदत्यन्तायतमित्येवार्थ इत्यन्ये ।

तिष्ठद्गुप्रभृतीनि च (२. १. १७)

अत्र भोजः— 'तिष्ठद्गुवहद्ग्वायतीगवानि कालविशेषे न चान्यसमासः' (स० ३-२-२२) । दोहार्थं गावस्तिष्ठन्त्यत्रेति सन्धान-

न्तरकालस्तिष्ठद्गु । गोष्ठं (वहन्ति) गच्छन्ति गावोऽत्रेति सन्ध्यापूर्वकालो वहद्गु । तदेवायतीगवम् । अव्ययत्वात् सर्वविभक्तिष्वेवम् । आद्यावुदितकालार्थावित्येके । न चान्यसमास इत्युक्तेः परमतिष्ठद्ग्वित्यादि न । आतिष्ठद्ग्वित्याद्यव्ययीभावस्तु स्यादिति शङ्करः । 'लूनलूयमानपूतपूयमाना यवेन न च द्वितीयादिविभक्तिः'[1](स० ३-२ २३)। लूनो यवोऽत्रेति लूनयवं कालो वर्तत इत्यादि प्रथमैव । पवनं शूर्पक्रिया। 'खलेसंहृतसंह्रियमाणा बुसेन च' (स० ३-२-२४)। एते यवेन बुसेन च समस्यन्ते न च द्वितीयादि स्यात् । खले बुसमस्त्यत्रेति खलेबुसं कालः । खलेयवम् । संहृतयवम् । संहृतबुसमित्यादि । संहृतिः पुञ्जीकरणम् । 'सुविनिर्दुरायतीपापपुण्यापराणि समया'[2] (स० ३ २-२५) । अत्र द्वितीयाद्यपि स्यात् । 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः (८-३-८८) इति षत्वं वक्ष्यते । सुषमं दुःषमं वाभूद्देशस्य । सुभिक्षादिना समायाः शोभनत्वं दुष्टत्वं वाभूदित्यर्थः । विषमं निष्षमं वाभूद् बालस्य । समया विगतत्वं निर्गतत्वं वाभूत् । वत्सरावसानमभूदित्यर्थः । आयन् वत्सर एव आयतीसमम् । पापसमम् । पुण्यसमम् । अपरसमं चैवम् । अपसमामिति केचित् पेठुः । समाया अपगतत्वं तत् । एवं सुषमादीनां हराद्युक्तोऽर्थः । नाथस्त्वेषां बहुव्रीह्यर्थमाह । शोभना समा अस्मिन्निति सुषमं देशः । दुष्षमं जना इत्यादि । 'समं भूमिपदातिभ्यामन्यपदार्थे' (स० ३-२-२६) समस्य मान्तत्वं निपात्यते । कालभावयोरेवान्यपदार्थतेष्टा । कलहादौ द्वयोः समा भूमिः पदातयो वा यस्मिन् काले स समंभूमि । समंपदाति । भावः क्रिया । तत्र समंभूमि कर्षति । समंपदाति युध्यते । भूमेः पदातेश्च समत्वमेवार्थ इति रामः । समंभूमि यौधानामित्यादि । समभूमि, समपदाति, संभूमि संपदाति इति हरोक्ते पाठद्वयेऽपि रामोक्तवदेवार्थः । 'प्राह्णरथमृगदक्षिणाभिः' (स० ३-२-२७) । प्राग्वत् कालभावयोर्वाच्योः प्रशब्दोऽह्नादिभिः समस्यते ।

अह्नोऽदन्तात् (८-४.७)

---

१. न च व्यतिरेकविभक्तिः' २. 'सुविनिर्दुरपरायतिपापपुण्यानि समया' इति च मुद्रितसरस्वतीकण्ठाभरणपाठः.

अदन्तपूर्वपदस्थान्निमित्तात् परस्याहन्शब्दनकारस्य णः स्यात्। प्रक्रान्तमहरत्रेति प्राह्णं कालः। प्रास्थिता रथा अस्मिन् प्ररथं कालः। प्रनष्टा मृगा अस्मिन् प्रमृगं कालः। प्रकृता दक्षिणा अत्रेति प्रदक्षिणं यज्ञः। भावोऽयम्। प्राह्णादिष्वह्नः प्रगतत्वमित्याद्यर्थो हरोक्तः। सम्प्रत्यसम्प्रत्यप्रदक्षिणानि वर्तमानावर्तमानवामेषु' (स० ३.२.२८)। सम्प्रतिशब्दो युक्तामत्यर्थेऽपीति हरः। न चान्यसमास इति सर्वत्र योज्यम्। तेनातिप्राह्णमित्यादि न स्यादिति॥

## पारे मध्ये षष्ठ्या वा (२. १. १८)

एतदन्ततया निपातितावेतौ षष्ठ्यन्तेन वा समस्येते। गङ्गायाः पारं पारेगङ्गम्। मध्येगङ्गम्। पारेगङ्गादागतः। वेत्युक्तेः षष्ठीसमासोऽपि। गङ्गापारम्। गङ्गामध्यम्। विभाषानुवृत्तेर्वाक्यमपि। 'पारेमध्येऽग्रेऽन्तः षष्ठ्या वा' (स० ३.२.२९) इति भोजः। अग्रेनृपं नृपाग्रम्। अन्तर्गृहं गृहान्तः॥

## संख्या वंश्येन (२. १. १९)

विद्यया जन्मना वा कृते वंशे भवो वंश्यः। तद्वाचिना संख्या वा समस्यते। त्रिमुनि व्याकरणस्य। विद्ययैकवंश्यास्त्रयो मुनयस्सन्तीत्यर्थः। एवं द्विशाब्दिकं बह्वृषि। जन्मना शतधातेराष्ट्रम्॥ संख्या वंश्येनेत्येतत् बहुव्रीहिविषयेऽपि स्यादिति हरः। त्रिमुनि व्याकरणम्। बह्वृषि ग्रामः॥

## नदीभिश्च (२. १. २०)

नदीभिः संख्या समस्यते। समाहारे चायमिष्टः। सप्तधा भूतानां गङ्गास्रोतसां समूहः सप्तगङ्गम्। द्वियमुनम्॥

## अन्यपदार्थे च संज्ञायाम् (२. १. २१)

सुबन्तं नदीभिः सहान्यपदार्थे नाम्नि समस्यते। (उन्मत्ता) उत्क्षुभिता गङ्गास्मिन्नित्युन्मत्तगङ्गं नाम देशः। तूष्णींगङ्गम्।

शनैर्गङ्गम् । 'तृतीयासप्तम्योर्बहुलम्' (२. ४. ८४) इति बहुलोक्तेः समृद्धिसंख्यानद्युक्ताव्ययीभावानां सप्तम्यां नित्यमम्भावः । भृत्यसमृद्धावित्यर्थे सुभृत्यम् । एवं द्विशाब्दिकम् । उन्मत्तगङ्गम् । इति ॥

समासान्ताः (५. ४. ६८)

इतः परमुच्यमानास्तद्धिताः समासस्यान्तावयवाः स्युः ॥

अव्ययीभावे शरत्प्रभृतिभ्यः (५. ४. १०७)

शरदादिभ्योऽव्ययीभावे समासान्तस्तद्धितष्टच् स्यात् । 'शरद्विपाशनस्मनसुपानद्धिमवदनडुत्पथिद्युदिग्दृग्यत्तच्चतुर्भ्यः[1]'(स० ५. ४. १२२) प्रतिशरदम् । उपविपाशम् । अध्यनसम् । अधिमनसम् । प्रत्युपानहम् । अधिहिमवतम् । अन्वनडुहम् । अनुपथम् । अधिदिवम् । प्रतिदिशम् । अभिदृशम् । अधियदं दृष्टः । उपतदमस्ति । यत्र दृष्टस्तत्समीपे आस्त इत्यर्थः । अधिचतुरम् । 'जराया जरस् च' । (स० ५. ४. १२३) उपजरसं वर्तते । 'प्रतिपरसमनुभ्योऽक्ष्णः' (स० ५. ४. १२४) आभिमुख्येऽव्ययीभावः । प्रत्यक्षमास्ते । योग्यतायां समक्षमास्ते । अक्षियोग्यमित्यर्थः । एवमक्ष्णः पश्चादन्वक्षम् । परशब्दस्तु तत्पुरुष एवेति रामहरौ । अक्ष्णः परं परोक्षम् । पृषोदरादौ वक्ष्यते । प्रत्यक्षसमक्षौ तत्पुरुषेऽपि वक्ष्येते ॥

अनश्च (५. ४. १०८)

अन्नन्तादव्ययीभावात् समासान्तष्टजिष्यते ।
'नस्तद्धिते'टिलोपः स्यादुपराजमुपार्यमम् ॥

नपुंसकादन्यतरस्याम् (५. ४. १०९)

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज् वा स्यात् । अधिचर्मम् । अधिचर्म ॥

नदीपौर्णमास्याग्रहायणीभ्यः (५. ४. ११०)

एभ्योऽव्ययीभावे टज् वा । उपनदम् उपनदि । अधिपौर्णमासम्, अधिपौर्णमासि । उपाग्रहायणम्, उपाग्रहायणि ॥

---

१. 'चतुर्भ्योऽव्ययीभावे' इति मुद्रितपाठः ।

झयः (५. ४. १११)

झयन्तादव्ययीभावाट्टज् वा प्रतिसमिधं, प्रतिसमित् । अधिमरुतम्, अधिमरुत् ॥

गिरेश्च सेनकस्य (५. ४. ११२.)

गिर्यन्तादव्ययीभावाट्टज् वा । सेनकोक्तिः पूजार्था । उपगिरम्, उपगिरि ॥

प्रतेरुरसः सप्तमीस्थात् (५. ४. ८२.)

प्रतेः परात् सप्तम्यर्थवृत्तेरुरसोऽच् स्यात् । प्रत्युरसम् । विभक्त्यर्थे समासः ॥

अनुगवमायामे (५. ४. ८३)

'यस्य चायामः, (२-१-१६) इति समासे अनुगवमिति निपात्यते । अनुगवं यानम् । तत्तुल्यायाममित्यर्थः ।

॥ इत्यव्ययीभावः ॥

तत्पुरुषः ( २. १. २२)

इतः परं समासस्तत्पुरुषाख्यः ॥

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (२.१.२४)

द्वितीयान्तं समर्थं सुबन्तं श्रितादिभिर्वा समस्यते, स च समासस्तत्पुरुषाख्यः । कृष्णं श्रितः कृष्णश्रितः । दुःखातीतः । यमुनापतितः । मथुरागतः । दिनात्यस्तः । गृहप्राप्तः । सुखापन्नः ॥

प्राप्तापन्ने च द्वितीयया (२. २. ४)

एते द्वितीयान्तेन वा समस्येते । तेन प्राप्तगृहः आपन्नसुखः इत्यपि स्यात् । स्त्रियां तु प्राप्ता गृहं प्राप्तगृहेत्यत्र प्राप्तापन्ने अ चेति छेदादत्त्वम् । सौत्रत्वान्न प्रकृतिभावः । एवमापन्नसुखा । 'गमिगाम्यादेरुपसङ्ख्यानम्' । ग्रामं गमी ग्रामगमी । ग्रामगामी । अन्नंबुभुक्षुः । मधुपिपासुः ॥

स्वयं क्तेन (२. १. २५)

स्वयंशब्दः क्तान्तेन समस्यते । स्वयंकृतं व्यसनम् ॥

खट्वा क्षेपे (२. १. २६)

द्वितीयान्ता खट्वा क्षेपे द्योत्ये क्तेन समस्यते । खट्वारूढः । खट्वाप्राप्त इति दुर्दान्तमाहुः । क्षेपाभावे खट्वामारूढो विद्वान् ॥

सामि (२. १, २७)

अर्धार्थः सामिशब्दः क्तेन समस्यते । सामिभुक्तम् ॥

कालाः (२. १. २८)

द्वितीयान्ताः कालाः क्तेन समस्यन्ते । मासं मातुमारब्धो मासप्रमितः प्रतिपच्चन्द्रः ॥

अत्यन्तसंयोगे च (२. १. २९)

अत्यन्तसंयोगे द्वितीयान्ताः कालाः सुपा समस्यन्ते । दिनं व्याप्तं सुखं दिनसुखम् ॥

तृतीया तत्कृतार्थेन गुणवचनेन (२. १. ३०)

तृतीयान्तं तत्कृतगुणवचनेनार्थशब्देन च समस्यते । कुङ्कुमेन शोणः कृतः कुङ्कुमशोणः । नासिकया क्षुद्रः कृतो नःक्षुद्रः । '—यत्तस् क्षुद्रेषु' (वा ०६-१-६३)इति नसभावः । अक्ष्णा काण इत्यादौ काणत्वस्य रोगादिकृतत्वादसमासः । अर्थशब्देन तु — धान्येन प्रयोजनं धान्यार्थः ॥

पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः (२. १. ३१)

एतैस्तृतीया समस्यते । मासेन पूर्वो मासपूर्वः । एवं हरिसदृशः । विष्णुसमः । ऊनार्थैः—पापोनः पापहीनः । तर्ककलहः । वाङ्निपुणः । गुणमिश्रः । वेषश्लक्ष्णः । अवरेणापीष्टम् । मासावरः वंशावरः । तुल्याधिकाभ्यां च भोजः । इन्द्रतुल्यः । गुणाधिकः ॥

कर्तृकरणे कृता बहुलम् (२. १. ३२)

कर्तरि करणे च या तृतीया सा कृदन्तेन बहुलं समस्यते। हरिणा हतो हरिहतः नखभिन्नः। बहुलोक्तेः खड्गेन लूनवानित्यत्र न ॥

कृत्यैरधिकार्थवचने (२. १. ३३)

स्तुत्या निन्दया चासदर्थारोपणे सति कर्तृकरणार्था तृतीया कृत्यैः समस्यते। मुष्टिग्राह्यं मध्यमिति स्तुतिः। काकपेया नदीति तुच्छाम्बुत्वान्निन्दा ॥

अन्नेन व्यञ्जनम् (२. १. ३४)

व्यञ्जनवाचि तृतीयान्तमन्नेन समस्यते। क्षीरेण सिक्त ओदनः क्षीरौदनः ॥

भक्ष्येण मिश्रीकरणम् (२. १. ३५)

मिश्रीकार्यं वस्तु भक्ष्येण समस्यते। गुडेन मिश्रः पृथुकः गुडपृथुकः।

यानेन युग्यं पात्रेण पूर्णं चेति भोजराट्।
अश्वैरूढो ह्यश्वरथः पयःपूर्णः पयोघटः ॥

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (२. १. ३६)

चतुर्थ्यन्तं तदर्थवस्तुभिरर्थादिभिश्च समस्यते। तदर्थेन समासः प्रकृतिविकारभाव एवेष्टः। कुण्डलाय हिरण्यं कुण्डलहिरण्यम्। अन्यत्र न। रन्धनाय स्थाली। अश्वघासादौ तु षष्ठीसमास इति रामाद्याः। 'अर्थेन नित्यसमासः सर्वलिङ्गता च।' (वा ६-१-३६) कृष्णायेदं कृष्णार्थं पयः। कृष्णार्था स्रक्। इदमर्थोऽत्रार्थशब्द इति भोजः। भूतबलिः। द्विजहितम्। द्विजसुखम्। गवे रक्षा गोरक्षितम् ॥

पञ्चमी भयेन (२. १. ३७)

वा समस्यते। चोराद्भयं चोरभयम्। 'कृता बहुलमि'त्यधिकाराद् रिपुभीतः, रिपुभीरुः। ग्रामनिर्गतः. अधर्मजुगुप्सुरित्यादि ॥

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः (२. १. ३८)

एभिः पञ्चमी क्वचित् समस्यते। सुखादपेतः सुखापेतः। कल्पनापोढः। बन्धमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। अल्पश इत्युक्तेः प्रासादा पतित इत्यादौ न ॥

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन (२. १. ३९)

पञ्चम्यन्तानि स्तोकाद्यर्थानि कृच्छ्रपदं च क्तेन समस्यन्ते ॥

पञ्चम्याः स्तोकादिभ्यः (६. ३. २)

स्तोकादिभ्यः परस्याः पञ्चम्या उत्तरपदे परेऽलुक्[1]। स्तोकात् कुपितः। अल्पान्मुदितः। अन्तिकाद्दृष्टः। सविधादागतः। दूरादागतः। विप्रकृष्टाच्छ्रुतः। कृच्छ्राल्लब्धः ॥

षष्ठी (२. २. ८)

षष्ठ्यन्तं समर्थेन सुपा वा समस्यते। राजपुरुषः ॥

याजकादिभिश्च (२. २. ९)

'तृजकाभ्याम्—' (२.२.१५) इति निषेधं बाधित्वैभिः षष्ठी समस्यते। द्विजयाजकः। हरिपूजकः इत्यादि। 'याजकपूजकपरिचारकपरिवेषकस्नापकाध्यापकोत्सादकोन्मादकोद्वर्तकहोतृभर्त्रादिभिश्च' ।(स० ३.२.१३४) भर्तृशब्दोऽत्र धवार्थः। श्रीभर्ता। अन्यत्र[2] न। वज्रस्य भर्ता। 'रथपत्ती गणकेन' (स० ३. २. १३५)। रथगणकः। पत्तिगणकः ॥

न निर्धारणे (२. २. १०)

निर्धारणार्था षष्ठी न समस्यते। नृणां श्रेष्ठोऽयम्। सर्वमहानित्यादौ स्यादिति भोजः। 'ज्ञोऽविदर्थस्य करणे' (२.३.५१)

---

१. 'देऽलु' ग. छ. पाठः. २. 'स्य ग. पाठः.

इत्यादिप्रतिपदोक्तषष्ठ्या निष्ठान्तेनासमासो वाच्यः । सर्पिषो ज्ञातम् । सर्पिषा प्रवृत्तमित्यर्थः । भावे क्तः ॥

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन (२. २. ११)

एतैः षष्ठी न समस्यते । पूरणे—छात्राणां षष्ठः । धान्यषष्ठादौ 'पूरणाद् भागे' (५.३.४८) इत्यन्नन्तत्वात् समास इति वामनः । गुणे-पटस्य शुक्लः । अयं गुणे गुणिनि च वर्तते । सदा गुणवाचिनां न निषेधः । चन्दनगन्धः ।

पटस्य शौक्ल्यमित्यादौ समासो नेति वृत्तिकृत् ।
तेषां सदा गुणार्थत्वात् स्यादेवेति कुमारिलः ।

वृत्तिमतेऽपि 'वर्तमानसामीप्ये—' (३.३.१३१) इत्यादिज्ञापकेनानित्यत्वाद् यत्नगौरवमित्यादिसिद्धिः । सुहितार्थः । फलानां सुहितः । अन्नस्य तृप्तः तेन तृप्त इत्यर्थः । अत्र षष्ठ्याः समासनिषेधात् तृप्तार्थयोगे करणे षष्ठ्यपि ज्ञाप्या सदिति शतृशानचौ । नृपस्य पचन् । अव्यये - नृपस्य पक्त्वा । हर्म्योपरि सर्वपश्चादित्यादौ स्यादिति भोजः । तव्ये-मतां कर्तव्यम् । तव्यता तु स्यात् । द्विजकर्तव्यम् । समानाधिकरणे-राज्ञो नलस्य दयिता । नाम्नो विशेषणसमासोऽपि नास्तीति नलस्यात्रासमास एवेति हरः ॥

## क्तेन च पूजायाम् (२. २. १२)

पूजायामिति मतिबुद्धिपूजार्थे (पूक्तः ३।२।१८८) क्त उक्तः । तेन षष्ठी न समस्यते । राज्ञां मतः । नृणां ज्ञातः । सतां पूजितः ॥

## अधिकरणवाचिना च (२. २. १३)

क्तेन षष्ठी न समस्यते । मुनीनामासिता भूमिः ॥

## कर्मणि च (२. २. १४)

'उभयप्राप्तौ कर्मणि' (२.३.६६) इत्युक्ता षष्ठी न समस्यते । गिरेरुद्धरणं हरिणा । अत्र 'कर्तृकर्मणोः कृति' (२.३.६५) इति हरौ गिरौ च

षष्ठीप्राप्तौ 'उभयप्राप्तौ कर्मणि' इति नियमात् गिरावेव षष्ठी जाता । सा न समस्यते । जनैरनिलसेवनमित्यादौ 'कर्मणि च येन संस्पर्शात् —' (३.३.११६)इति ल्युड्विधेरुपपदसमासः ॥

## तृजकाभ्यां कर्तरि (२. २. १५)

कर्त्रर्थाभ्यां तृजकाभ्यां षष्ठी न समस्यते । पुरां भेत्ता । वज्रस्य भर्ता । हरेरर्चकः । ' जनिकर्तुः प्रकृतिः'(१.४.३०)'तत्प्रयोजको हेतुश्च'(१.४.५५) इति सूत्रोक्त्या तृजकयोः समासनिषेधोऽनित्यः ॥

## कर्तरि च (२. २. १६)

कर्तरि षष्ठ्यकेन न समस्यते । भवतः शायिका । पर्यायादौ ण्वुजयम् । रामोक्तैवं सूत्रयोर्व्याख्या ॥

## नित्यं क्रीडाजीविकयोः (२. २. १७)

अनयोरर्थयोः षष्ठ्यकेन नित्यं समस्यते । पुष्पप्रचायिका क्रीडा । जीविकायां तृचापीति रामः । दन्तलेखकः । दन्तलेखिता । एवं गोपालिका ।[1]

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे (२. २. १)

भागवाचिनः पूर्वादयः शब्दाः एकद्रव्यत्वे सति भागिना समस्यन्ते । षष्ठीसमासस्यापवादोऽयम् । कायस्य पूर्वो भागः पूर्वकायः । एवमपरकायः । अधरकायः । उत्तरकायः । एकदेशिनैव समासोक्तेः पूर्वं नाभेरित्यत्र न । एकद्रव्यत्वाभावाद् यौधानां पूर्वोऽश इत्यत्र न । 'सायाह्नमध्याह्नमध्यन्दिनमध्यरात्रादयः' (स० ३. २. १२३) इति भोजः । अह्नः सायोऽवसानभागः सायाह्नः । मध्यन्दिने निपातनान्मुम् । मात्युक्तेः पश्चिमरात्रः ॥

## अर्धं नपुंसकम् (२. २. २)

समभागवाच्यर्धशब्दः क्लीबं, स एकदेशिनैकद्रव्येण समस्यते । देहस्यार्धमर्धदेहः । वेति भोजः । षष्ठीसमासोऽप्यत्रेष्ट इति हरश्च । तेन देहार्धमित्यपि । अंशवाचिनस्तु षष्ठीसमास एव । ग्रामार्धः । कलायामर्धचन्द्रस्तु अर्धश्चासौ चन्द्रश्चेति नयः ॥

---

१. 'लक्'' ग. घ. छ. पाठः.

द्वितीयतृतीयचतुर्थतुरीयाण्यन्यतरस्याम् (२. २. ३)

एते प्राग्वद् भागिना वा समस्यन्ते। भिक्षाया द्वितीयो भागः द्वितीयभिक्षा, भिक्षाद्वितीयम्। एवं तृतीयभिक्षेत्यादि। तुर्यस्यापीष्टम्। तुर्यभिक्षा, भिक्षातुर्यम्। तलाग्राद्यश्चेति भोजः। तलपादः, पादतलम्। अग्रहस्तः, हस्ताग्रम्। ऊर्ध्वकायः, कायोर्ध्वमित्यादि॥

सप्तमी शौण्डैः (२. १. ४०)

सप्तम्यन्तं शौण्डादिभिर्वा समस्यते। शौण्डधूर्तकितवव्याडसंवीतपटुपण्डितकुशलनिपुणचपलान्तराधिभिः। शास्त्रे शौण्डः शास्त्रशौण्डः। स्त्रीधूर्तः। अक्षकितवः। व्याडो दुश्शीलः। गृहव्याडः। गुहासंवीतः, तत्र तिरोहितः। वेदपटुः। शास्त्रपण्डितः। तर्ककुशलः। काव्यनिपुणः। वाक्चपलः। गृहेऽन्तर्गृहान्तः। अध्युत्तरपदाभित्यं ख चक्रः, राजाधीनः॥

सिद्धशुष्कपक्वबन्धैश्च (२. १. ४१)

एभिः सप्तमी समस्यते। शास्त्रे सिद्धः शास्त्रसिद्धः। आतपशुष्कः। स्थालीपक्वः। काराबन्धः॥

ध्वाङ्क्षेण क्षेपे (२. १. ४२.)

क्षेपे द्योत्ये सप्तमी ध्वाङ्क्षार्थैः समस्यते।
तीर्थे ध्वाङ्क्षश्चिरं नास्ते तद्वत् कार्येऽनवस्थितः।
तीर्थध्वाङ्क्षस्तीर्थकाको बकाद्यैश्चाह भोजराट्॥

तीर्थबकः। तीर्थकुक्कुटः॥

कृत्यैर्ऋणे (२. १. ४३)

ऋणे द्योत्ये सप्तमी कृत्यैः समस्यते। अल्पश इत्यनुवृत्तेर्यदन्तेनैव। मासदेयमृणम्। ऋणं नियतकार्योपलक्षणम्। सन्ध्याजप्यो मन्त्रः। पूर्वाह्णगेयं साम। 'तत्पुरुषे कृति—' (६-३-१४) इत्यलुक्।

संज्ञायाम् (२. १. ४४)

---

१. 'मण्य' च . पाठः.

त्वक्सिसारो वेणुः । अरण्येतिलकः वनेकिंशुकश्च तरुभेदः । 'हलदन्तात्—' (६-३-९) इत्यलुक् ॥

क्तेनाहोरात्रावयवाः (२. १. ४५)

अहरंशाः रात्र्यंशाश्च क्तेन समस्यन्ते। पूर्वाह्णकृतम्। अपररात्रकृतम् ॥

तत्र (२. १. ४६)

एतत् क्तेन समस्यते। तत्रकृतम्।

क्षेपे (२. १. ४७.)

क्षेपेऽर्थे सप्तमी क्तेन समस्यते। भस्मनिहुतम् । उदकेविशीर्णम्। निष्फलमित्यर्थः । अवतप्तेनकुलस्थितम्। तप्तस्थले नकुलस्य चिरानवस्थानात् तद्वत्फलं तत्। 'तत्पुरुषे कृति—' (६-३-१४) इत्यलुक्।

पात्रेसमितादयश्च (२. १. ४८)

एते क्षेपे स्युः। 'पात्रमवधारणे समितबहुलाभ्यां न चान्यसमासः' (स० ३ २. ६६) । पात्रेसमितोऽयम्। भोक्तुं पात्र एव सङ्गतः, नान्यत्रोपयोगीत्यवधारणेन क्षेपः। एवं भोक्तुमेव प्रायेणागच्छन् पात्रेबहुलः। अन्यसमासनिषेधात् पापपात्रेसमितः इत्यादि न। 'तत्पुरुषे कृति—(६-३-१४) इति बहुलोक्तेः सर्वत्रालुक्। 'गेहगोष्ठौ शूरक्ष्वेलिनर्दिविजितव्याडपटुपण्डितप्रगल्भैः' (स० ३. २. ६७) । अवधारणे सति क्षेपे समस्येते। गेह एव शूरः गेहेशूरः। क्ष्वेलिनर्दिनौ गर्जकार्थौ। व्याड उक्तः। गेहेक्ष्वेली। गोष्ठेक्ष्वेलीत्यादि। सर्वत्रालुगूह्यः। 'उदुम्बरः क्रिमिमशकाभ्यामुपमायाम्' (स० ३. २. ६८)। उदुम्बरक्रिमिः । उदुम्बरमशकः। तत्फलान्तर्गतौ ताविवाल्पदृष्टिविस्तार इत्यर्थः। 'अवटकूपौ कच्छपमण्डूकाभ्याम्' (स० ३. २. ६९)। उपमायामेव । अवटकच्छपः। कूपमण्डूकः । अल्पदल्पदर्शीत्यर्थः । उदपानमण्डूकः कच्छमण्डूक इत्यपि माधवः। 'नगरं काकादिभिः' (स० ३. २. ७०)। नगरकाकः। नगरवायसः। नगरश्वा। तथा धृष्ट उक्तः। 'गेहेमेहिपिण्डीशूरौ निरीहतायाम्' (स० ३. २. ७१)। 'पितरि-

शूरमातरिपुरुषौ क्षियायाम्' (स० ३. १. ७२) । क्षिया दुराचारः । 'गर्भः सुहिततृप्तदृप्तैरनौचित्ये' (स० ३. २ ७३)। गर्भेसुहितः । गर्भेतृप्तः । गर्भेदृप्तः । गर्भमात्रेण पुत्रोत्पत्तिवच्चेष्टत इत्यनौचित्यम् । 'कर्णेष्टिरिटिराचुरुचुरा-भ्याम् । अनौचित्य एव । कर्णेटिरिटिरा । कर्णे चुरुचुरा । असह्यवागनुकरणाभ्यामाभ्यामनुचितक्रियोच्यत इति ॥

इहानुक्तैः समासार्थं द्वितीयेत्यादि खण्ड्यताम् ।
कृता बहुलमित्येतत् बाहुल्यं वा विजृम्भताम् ॥

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन (२. १. ४९)

पूर्वकालार्था एकाद्याश्च समानाधिकरणेन समस्यन्ते । पूर्वकालक्रियार्था उत्तरकालक्रियार्थैरेव । स्नातानुलिप्तः । अत्र स्नातस्यानुलिप्तस्य चैकत्वात् समानाधिकरणत्वम् ॥

तत्पुरुषः समानाधिकरणः कर्मधारयः (१. २. ४२)

एकाभिधेयपदार्थात्मकस्तत्पुरुषः कर्मधारयाख्यः । 'पुंवत्कर्मधारय—' (६. ३. ४१) इति वक्ष्यमाणपुंवद्भावात् टाब्निवृत्तिः । स्नाता च विलिप्ता च स्नातविलिप्ता । एकपुरुषः । सर्वजनाः । जरद्गृध्रः । पुराणमुनिः । नववधूः । केवलशूरः ॥

दिक्सङ्ख्ये संज्ञायाम् (२. १. ५०)

दिक्छब्दाः सङ्ख्याशब्दाश्च नाम्नि समानाधिकरणेन समस्यन्ते । उत्तरकोसलाः । सप्तर्षयः । त्रिवली ॥

तद्धितार्थोत्तरपदसमाहारे च (२. १. ५१)

तद्धितार्थे विवक्षिते उत्तरपदे च परे समाहारे चार्थे दिक्सङ्ख्याः समानाधिकरणेन समस्यन्ते । तद्धितार्थे — पूर्वस्यां शालायां भव इत्यत्र तद्धिते कार्ये पूर्वशालेति समस्यते । ततो 'दिक्पूर्वपदाद्—' (४. २. १०७) इति ञे कृते पौर्वशालः । उत्तरपदे — पूर्वशालाप्रियः । अत्र पूर्वा शाला प्रियास्येति त्रिपदबहुव्रीहौ कृते

सुब्लुकः प्राक् प्रियापदे परे पूर्वयोस्तत्पुरुषोऽयं स्वराद्यर्थमुक्तः। दिक्षु समाहारो न। सङ्ख्यायां तु त्रयमस्ति। तत्र तद्धितार्थे — पञ्चसु कपालेषु संस्कृत इत्यत्र पञ्चकपालेति समासः। अण्,

संख्यापूर्वो द्विगुः (२. १. ५२)

इहोक्तः सङ्ख्यापूर्वः समासो द्विगुसंज्ञः। तेन 'द्विगोर्लुग् —' (४. १. ८८) इत्यणो लुकि पञ्चकपालः पुरोडाशः। उत्तरपदे प्राग्वत् पञ्चपणधनः। समाहारे तु,

द्विगुरेकवचनम् (२. ४. १)

समाहारद्विगुरेकार्थवचनः स्यात्॥

स नपुंसकम् (२. ४. १७)

यस्यैकवचनत्वमुक्तं स क्लीबम्। पञ्चानां धेनूनां समाहारः पञ्चधेनु। द्विधेनु। एकस्मिन्नपि लोभादिना बहुत्वारोपात् समाहारः स्यादित्याहुः। एकधेनु। गोसमूहवदाहतैका धेनुरित्यर्थः॥

कुत्सितानि कुत्सनैः (२. १. ५३)

कुत्सितवाचीनि कुत्सनार्थैः समस्यन्ते। शाब्दिकखसूचिः। निष्प्रतिभ इत्यर्थः। तेन शाब्दिकत्वं कुत्स्यते। एवं मीमांसकदुर्दुरूटः। नास्तिकार्थोऽयम्। दुर्दुरूट इति दीर्घमाह भोजः। एवं मानुषखेटः। नरापशदः। नराधमः इत्यादि॥

पापाणके कुत्सितैः (२. १. ५४)

पापद्विजः। अणकद्विजः। 'पापाणकहतदग्धादीनि कुत्सितैः' इति भोजः। हतविधिः। दग्धदैवम्। क्षुद्रतापसः॥

उपमानानि सामान्यवचनैः (२. १ ५५)

उपमानवाचिनः साधर्म्यवाचिभिः समस्यन्ते। घन इव श्यामो घनश्यामः। अत्रापि कर्मधारयत्वात्पुंवत्त्वमिष्टम्। मृगीव चपला मृगचपला॥

---

१. 'त्रु ए', २. 'समासः स्यां' क. पाठः.

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (२. १. ५६)

उपमेयमुपमानभूतैर्व्याघ्रादिभिः सह साधर्म्याप्रयोगे समस्यते। व्याघ्र इव नृपो नृपव्याघ्रः। नृपचन्दनः। एवं नृपसिंह-मुखाब्ज-मुखेन्दु-करपल्लवादि। साधर्म्यप्रयोगे तु न। पुरुषो व्याघ्र इव शूरः। प्राग्वदिहापि पुंवत्त्वाद् राज्ञी सिंहीव राजसिंही॥

## विशेषणं विशेष्येण बहुलम् (२. १. ५७)

विशेषणवाचि सुबन्तं समानाधिकरणेन विशेष्येण बहुलं समस्यते। नीलमुत्पलं नीलोत्पलम्। बहुलोक्तेः कृष्णसर्पादौ नित्यम्। तक्षकः सर्पः इत्यादौ नास्त्येव॥

तथैव सर्वसंज्ञानामसमासं हरोऽब्रवीत्।
नाथः पुनस्तक्षकाहिरित्याद्यप्याह युक्तिभिः॥

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च (२. १. ५८)

एते समानाधिकरणेन समस्यन्ते। पूर्वगिरिः। अपरजलधिरित्यादि॥

## श्रेण्यादयः कृतादिभिः॥ २. १. ५९)

च्व्यर्थोऽत्रेष्टः। अश्रेणयः श्रेणयः कृताः श्रेणीकृताः। श्रेण्यूकपूगकुन्दुमराशिनिचयविशिष्टनिर्धनेन्द्रदेवमुण्डश्रमणभूतवदान्याध्यापक-ब्राह्मणक्षत्रियपटुपण्डितकुशलचपलनिपुणाः श्रेण्यादयः। कृतादयस्तु-कृतमतमितोक्तभूतसमाज्ञाताम्नातारव्यातसम्भावितावधारितावकल्पित-कलितनिराकृतोपकृतापकृतोदाहृतोदीरितोदितदृष्टविश्रुतादयः।

एषां यथाक्रमं नास्ति च्व्यर्थः सर्वत्र चोह्यताम्।
कुन्दुमोक्तौ समूहार्थौ गाव ऊकक्रता इमे॥

एवं निचयभूताः। विशिष्ट इति मतो विशिष्टमतः। निर्धन इत्युपकृतो निर्धनोपकृतः। इन्द्रोक्तः। भूतः प्रथम इति निराकृतो भूतनिराकृतः। भूतापकृतः। श्रमण इत्यूहितः श्रमणसम्भावितः। पटुरिति

दृष्टः पटुदृष्टः । चपल इति ज्ञातः चपलज्ञातः । चपलकलितः । पण्डित-विश्रुतः इत्यादि सर्वैर्योज्यम् ॥

क्तेन नञ्विशिष्टेनानञ् ( २. १. ६० )

अनञ् क्तान्तं नञ्मात्रविशिष्टेन तेनैव क्तान्तेन समस्यते । कृताकृतम् । भुक्ताभुक्तम् । विकल्पकृतत्वादर्धकृतत्वाद्वैकस्यैव कृत-त्वमकृतत्वं च । नुडिटौ तदंशत्वान्न भेदकौ । अशितानाशितेन जीवति । अत्र नञः परस्य नुट् । क्लिष्टाक्लिशितेन वर्तते । 'कृतापकृतादीनामुपसं-ख्यानम्' । कृतापकृतभुक्तापभुक्तापीतविपीतगतप्रत्यागतयातानुयातक्र-याक्रयिकापुटापुटिकाफलाफलिकामानोन्मानिकाश्च । 'भुक्तविभुक्त'मिति वृत्तिपाठः । इष्टानिष्टत्वादेकमेव सम्यक् कृतं चापकृतं च स्यात् । एक-कालीनत्वादेकमेव गतं च तत् प्रत्यागतं च । एवं तदानीमेव पुनर्गमनात् यातं च तदनुयातं च । अनुः पुनरर्थे । क्रयो महान् क्रयः । अल्पः क्रयः क्रयिका । 'अन्येषामपि दृश्यते'(६-१-१३७) इति दीर्घः । क्रया-क्रयिका । महाल्परूपः क्रय इत्यर्थः । एवमर्धविकासादिना महाल्परूपं सम्पुटं पुटापुटिका । तथैव बह्वल्परूपं फलं फलाफलिका क्वचित् परिमाणो-न्मानयोरेकेनान्यसिद्धौ मानोन्मानिका । 'शाकपार्थिवादीनामुपसंख्यान-मुत्तरपदलोपश्च । शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः । शिवब्राह्मणः । सहस्रबाहुरर्जुनः सहस्रार्जुनः । आणिपृष्ठो माण्डव्यः आणिमाण्डव्यः । परशुरामः इत्यादि । पञ्चाधिका दश पञ्चदशेत्यादिसंख्यासु तथा तृतीयोऽशस्त्र्यंश इत्यादौ पूरणप्रत्ययलोपो ज्ञेयः ॥

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः (२. १. ६१)

सत्पुरुषः । महामुनिरित्यादि । अत्र 'आन्महतः—'(६-३-४६) इत्यात्वम् ॥

वृन्दारकनागकुञ्जरैः पूज्यमानम् ( २. १. ६२ )

---

१. 'ल्पविहितत्वाद् वैक' ग, छ., 'ल्पविकृतत्वाद्' च. पाठः.

पूज्यमानमेतैः समस्यते। वृन्दारकः श्रेष्ठवाची। द्विजवृन्दारकः। बुधनागः। कविकुञ्जरः॥

कतरकतमौ जातिपरिप्रश्ने (२. १. ६३.)

कतराश्व आनेयः। कतमाश्वः।

किं क्षेपे (२. १. ६४)

कुत्सितो गौः किंगौः॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणी-प्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः (३. १. ६५.)

षण्डः पोटा। सकृत् सूता गृष्टिः। प्रत्यग्रसूता धेनुः। वन्ध्या वशा। गर्भघातिनी वेहत्। चिरसूता बष्कयणी। एतैर्जातिः समस्यते। द्विज-पोटा। गोपयुवतिः। दधिस्तोकम्। धनकतिपयम्। द्वावल्पार्थौ। गोगृष्टिः। हरिणी धेनुर्हरिणधेनुः। 'पुंवत्कर्म-'(६-३-४२)इति पुंवत्त्वम्। गोवशा। अजवेहत्। बस्तबष्कयणी। विप्रप्रवक्ता। विप्रश्रोत्रियः। विप्राध्यापकः। अध्यायक इति पाठेऽध्येतेत्यर्थः। विप्रधूर्तः। धूर्तोऽत्र धीमान् (?)॥

प्रशंसावचनैश्च (२. १. ६६.)

प्रशस्तार्थैर्जातिः समस्यते।

मतर्चिका मतल्ली च प्रकाण्डं चोद्धतल्लजौ।
इत्थं नियतलिङ्गास्ते वल्लवीतल्लजो यथा।

एते च स्वार्थे कप्रत्ययान्ताः क्वचिदन्यालिङ्गा अपि स्युरिति टीकासर्वस्वे। वीरप्रकाण्डकौ। कुमारीतल्लजिका। 'पादमिश्रपाशहस्त-भित्तिस्थलपाल्यादिभिः' इति भोजः।

पितृपादा भट्टमिश्रा अंसभित्तिरुरःस्थलम्।
केशपाशः केशहस्तो गण्डपालिर्धनुर्लता॥

युवा खलतिपलितवलिनजरतीभिः (२. १. ६७)

खलतिर्गतकेशः। युवखलतिरित्यादि । जरतीति स्त्रीत्वोक्ति-र्युवतेरप्येभिः समाससंज्ञापनार्थैव। तेन युवजरन्नित्यपि स्यात् । युवतिः खलतिः युवखलतिः। युवपलितेत्यादि। पुंवत्त्वं प्राग्वत् ॥

कृत्यतुल्याख्या अजात्या ( २. १. ६८ )

कृत्यास्तुल्यपर्यायाश्चाजात्या समस्यन्ते। भोज्योष्णम्। पानीय-शीतलम्। तुल्यश्वेतः। सदृशमहान्। जात्या तु न भोज्यमोदनम् ॥

वर्णो वर्णेन ( २. १. ६३)

कण्ठे नीलो जटायां लोहितश्च नीललोहितः। 'जातिर्जात्या' (स० ३-२-९४) इति च भोजः। नरसिंहः। करिमकरो यादः ॥

कुमारः श्रमणादिभिः (२. १. ७०)

कुमारशब्द एभिः समस्यते। श्रमणाप्रव्रजिताबन्धकीकुलटाग-र्भिणीतापसीदास्यध्यापकाभिरूपकपण्डितकुशलचपलानिपुणपटुमृदुभिः। आद्यानां सप्तानां स्त्रीत्वात् पूर्वपदस्यापि स्त्रीत्वे पुंवत्त्वम्। कुमारी श्रम-णा कुमारश्रमणा। कुमारकुलटा । अस्त्रीषु कुमाराध्यापक इत्यादि ॥

चतुष्पादो गर्भिण्या (२. १. ७१)

चतुष्पाज्जातिर्गर्भिण्या समस्यते। गोगर्भिणी । पुंवत्त्वान्मृग-गर्भिणी ।

मयूरव्यंसकादयश्च (२. १. ७

अविहितलक्षणानां सर्वतत्पुरुषाणां निपातनमेतत्। अत्र भोजः-'मयूरच्छात्रौ व्यंसकेनोपमायां न चान्यसमासः' (स० ३-२-१०६) व्यंसको धूर्तः मयूर इव वागाकृतिमधुरो धूर्तो मयूरव्यंसकः। छात्रवत् प्रह्वो धूर्तः छात्रव्यंसकः । अन्येन समासाभावात् परमादिसमासो न । 'काम्बोजयवनौ मुण्डेन' (स० ३-२-१०७) काम्बोज इव मुण्डः काम्बोजमुण्डः। यवनमुण्डः । राम एष्विवार्थे नेच्छति। धूर्तो मयूर एव तथोच्यत इति। 'एहीडायश्चाभ्यामन्यपदार्थे

नपुंसकत्वं च' (स० ३-२-१०८)। एहीति तिङन्तमन्यपदार्थ इडायवाभ्यां समस्यते. क्लीबत्वं च स्यात्। एहीड एहियवेति च यस्मिन्निडाह्वानादिकर्मणि काले वा तदेहीडम् एहियवम्। 'अपेहि च वाणिजस्वागतद्वितीयविघसप्रघसादिभिः क्रियायाम्'(स० ३-२-१०९)। एभिरेहीत्यपेहीति च क्रियायां वाच्यायां समस्यते। तेन स्त्रीत्वम्। एहिवाणिजेत्युक्तिः यस्यां क्रियायां सा एहिवाणिजा। एवमपेहिवाणिजा। एहि स्वागतमिति यस्यां सा एहिस्वागता क्रिया। अत्रापेहि इति च दुर्योजम्। द्वितीयस्याह्वानं यस्यां सा एहिद्वितीया। अपेहिद्वितीया। एहि विघसेति भोक्त्राह्वानं तन्निरासो वा यस्यां सा एहिविघसा। अपेहिविघसा। एवं प्रघसेऽपि। द्वौ पचाद्यजन्तौ। 'प्रेहि स्वागतवाणिजाभ्याम्' (स० ३-२-११०)। प्रेहिस्वागता प्रेहिवाणिजा च क्रिया। प्राग्वदर्थः। 'प्रोह कट कर्दमाभ्यां द्वितीयया' (स०३-२-१११) द्वितीयान्ताभ्यामाभ्यां प्रोहेति समस्यते। प्रोह आहर कटमिति यस्यां क्रियायां सा प्रोहकटा। प्रोहकर्दमा। 'कृन्धिभिन्ध्युद्धमा विचक्षणलवणचूडाभिः' (स० ३-१-११२)। कृन्धि विचक्षणेति 'कृन्धि विचक्षणमिति वा यस्यां सा कृन्धिविचक्षणा क्रिया। कृणत्तिर्वेष्टनार्थः। छेदनार्थाल्लोटि कृन्तविचक्षणेति रामहरौ। एवं भिन्धिलवणा। पचलवणेत्यपि हरः। उद्धम दह चूडामिति यस्यां सा उद्धमचूडा। 'आहर चेलवसनवनिताभिः' (स० ३-२-११३)। आहरचेला क्रियेत्यादि। क्रियाभेदे विशेष्ये त्वेषां तल्लिङ्गतापि स्यात्। आहरवनितं युद्धम्। 'आख्यातमाख्यातेन क्रियासातत्ये' (स० ३-१-११४)। क्रियायामन्यपदार्थे सातत्ये द्योत्ये तिङन्तं तिङन्तेन समस्यते। अश्नीत पिबतेति नियोगः सातत्येन यस्याम् अश्नीतपिबता। खादततृप्यता। यज्ञे खादतमोदता। मोदतेत्यत्र तु गणे पूर्वनिपातनान्मुदेर्न तङ्। 'उद्धरोत्सृजावसृजाभ्याम्' (स० ३-२-११५)। उद्धरेत्येतदाभ्यामसातत्येऽपि समस्यते। उद्धरोत्सृजा। उद्धरावसृजा। 'पचपतवपस्तान्युदस्तैर्नैः' (सू० ३-२-११६)। उत्पूर्वाणि पचादीनि निपूर्वैस्तैरेव प्राग्वत् समस्यन्ते। ऊर्ध्वमधश्च पचेति यस्यां क्रियायां सा उत्पचनिपचा।

---

१. 'छिन्धिभिन्ध्यु', २. 'डादिभिः', ३. 'तादिभिः' ४. 'न सात' इति मुद्रितसरस्वतीकण्ठाभरणपाठः.

त्पतनिपता। (उद्धर निक्षिपेति उद्वप निवपेति) च यस्यां सा उद्वप निवपा। 'उन्मृजावमृजेन' (स० ३-२-११७)। ऊर्ध्वमधश्च मार्जयेति यस्यां सा उन्मृजावमृजा। मृडिति वाच्ये मृजेति निपातनात्। 'इहद्वितीयेहपञ्चम्येहिरेयाहिराहोपुरुषिकाहम्पूर्विकाहम्प्रथमिकाहमहमिकाविचप्रचानिश्चप्रचादयः' (स० ३-१-११८)। इह द्वितीय आस्ताम् इह पञ्चम इति यस्यां सा इहद्वितीया इहपञ्चमी। एहिरे याहिरे इति यस्यां सा एहिरेयाहिरा। अहो सत्पुरुषोऽहमिति मतिर्यस्यां सा आहोपुरुषिका। आहोपुरुषत्वमद्भुतपुरुषत्वम्। आहोपुरुषिकेति मनोज्ञादिवुञमाह शङ्करः। अहं पूर्वमिति मतिरुक्तिर्वा यस्यां सा अहम्पूर्विका। अहम्प्रथमिका। अहमहमिति यस्यां सा अहमहमिका। विकृतिस्थता प्रकृतिस्थता च यस्यां सा विचप्रचा। निश्चितं प्रचितं च निश्चप्रचम्। प्रचितं प्रसिद्धम्। आद्युक्तेरेहिरेगच्छरा। 'जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तरि' (स० ३-२-११९)। जहीति लोण्मध्यमपुरुषान्तमाभीक्ष्ण्ये सति कर्तरि वाच्ये कर्मणा बहुलं समस्यते। पुनः पुनर्जहि स्तम्बामिति य आह स जहिस्तम्बः। 'स्नात्वाकालकपीत्वास्थिरकभुक्त्वासुहितप्रोष्यपापीयउत्पत्यपाकलानिपत्यरोहिणीनिषद्यश्यामादयः' (स० ३-१-१२०) स्नानेऽपि मलिनः स्नात्वाकालकः। मद्यपानेऽप्यचापल्यः पीत्वास्थिरकः। भुक्त्यैव कृतार्थो भुक्त्वासुहितः। स्वगृहप्रवासान्मलिनो जातः प्रोष्यपापीयानिति शङ्करः। शेषास्त्रय' स्त्रीलिङ्गाः। तेषामर्थो मृग्यः। आद्युक्तेरागत्यभूतः। आगत इत्येवार्थः। 'आचोपचोच्चनीचाचपराचोच्चावचाकिञ्चनाकुतोभयानि। (स० १-२-१२१)। आचितमुपचितं च आचोपचं धनम्। आर्जितं परिवृद्धं चेत्यर्थः। उच्चैर्नीचैश्च स्थितम् उच्चनीचम्। अर्वाक् परस्ताच्च आचपराचम्। ऊर्ध्वं चार्वाक् च उच्चावचम्। न किञ्चनास्येत्याकिञ्चनः। न कुतोऽपि भयमस्येत्यकुतोभयः। विस्पष्टपटुरामूललोलमित्यादीनप्याह वामनः॥

कालाः परिमाणिना (१. २. ५

कालवाचिनस्तत्परिमितेन समस्यन्ते।

---

१. 'निष्यन्दश्या' ग. पाठः. २. 'व' मुद्रितसरस्वतीकण्ठाभरणपाठः.

मासो जातस्य यस्यासौ मासजातो ह्यहागतः ।
स्याद्बहुव्रीहिरित्यात्र षष्ठ्यन्तस्याप्रधानता ॥

नञ् (२. २. ६)

नञ् समर्थेन सुपा समस्यते । 'नलोपो नञः' (६-३-७३) इति नलोपः । नञ्युक्तस्यार्थः षोढोक्तः शृङ्गारे —

"तदन्यस्तद्विरुद्धश्च तदभावोऽपि तत्समः ।
तथापकृष्टश्चोत्कृष्टः क्रमेणागौरमङ्गलम् ॥

असमृद्धिरविप्रास्तु तत्तुल्याः क्षत्रियादयः ।
अदेवा उपदेवाः स्युरुत्कृष्टार्थे त्वमानुषः ॥"

तस्मान्नुडचि (६. ३. ७४)

लुप्तनकारान्नञः परस्याजादेर्नुडागमः स्यात् । अनश्वः । 'नञो नलोपः क्षेपे तिङि वाच्यः' (वा० ६-३-७३) । अ पचसि त्वं जाल्म । कुत्सितं पचसीत्यर्थः । सुपेत्युक्तेरिह नञोऽसमास एव । नैकधेत्यादौ नञर्थस्य नशब्दस्य समासान्नलोपाभावः ॥

न भ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या (६. ३. ७५)

एषु नञ् प्रकृत्या स्यात् । न भ्राजत इति नभ्राट् । न नरके पातयतीति नपात् पुत्रः । नवेदाः अज्ञः । न मुञ्चति शत्रुं नमुचिः । औणादिकोऽसुन्, किच्च । सत्सु साधवस्सत्याः । त एव नासत्याः । द्वौ नञौ । बहुत्वमविवक्षितम् । न कुलमस्त्यस्याशुद्धत्वादिति नकुलः । नीरन्ध्रत्वान्नखः । स्त्रीपुंसयोः पुंसकभावो निपात्यः । ताभ्यामन्यन्नपुंसकम् । न क्षरति न क्षीयते वा नक्षत्रम् । मन्दगामित्वान्न क्रामति नक्रः । डोऽन्येभ्यः इति डः । अकमसुखं नात्रेति नाकः ॥

## एकादिश्चैकस्य चादुक् (६. ३. ७६)

एकादिश्च नञ् प्रकृत्या स्यात्। एकशब्दस्य त्वादुगागमश्च। एकेन न विंशतिरेकान्नविंशतिः। एकान्नत्रिंशत्॥

## नगोऽप्राणिष्वन्यतरस्याम् (६. ३. ७७)

अप्राण्यर्थे नग इति वा स्यात्। नगो वृक्षः शैलश्च। अगो वा। प्राणिनि त्वगो वृषलः शीतेन॥

## ईषदकृता (२. २. ७.)

'ईषद् गुणवचनेनेति वाच्यम्' ईषत्कृष्णः। ईषदुन्नतः॥

## कुगतिप्रादयः (२. २. १८)

तत्र, 'कुः पापेषदर्थयोः' (स० ३-२-१४८)। पापा स्त्री कुस्त्री॥

## ईषदर्थेच* (६. ३. १०५)

ईषदर्थे कोः का स्यात्। ईषज्जलं काजलम्। गतिस्तूच्यते। 'कारिकाया गतित्वं वाच्यमि'ति गतित्वात्समासः। 'समासेऽनञ्पूर्वे-'(७-१-३७) इति ल्यप्। कारिकाकृत्य। क्रियां कृत्वेत्यर्थः। 'ऊर्यादिच्विडाचश्च' (१-४-६१) इति गतित्वम्। ऊरीकृत्य। ऊरीकृतम्। च्वौ-शुक्लीकृत्य। शुक्लीभवन्। शुक्लीसन्। डाचि-पटपटाकृत्य। एतत्सूत्रोक्तं गतित्वं कृभ्वस्तियोग एवेष्टम्। 'ऊर्युरर्युरुरी चाङ्गीकारे'।(स०१.१.१३३) एतेऽङ्गीकारेऽर्थे गतिसंज्ञाः। विस्तारे चेति स्वामी। ऊरीकृत्य। उररीकृत्य। उरुरीकृत्य। उरी चेति मुरारिपञ्चिका। उरीकृत्य। 'पांपी धूसी ताल्याताली वेताली च विस्तारे'(स०१.११३.४)। पांपभूय। पांपीकृत्य। तालीकृत्येत्यादि। विस्तार्य विस्तीर्य चेति चार्थः। 'पार्दाली[1] सेबाली केवाली केवास्यालोष्टी[2] सकला श्रंसकला ध्वंसकला अंशकला मस्मसा मसमसा च हिंसायाम्' (स० १.१. १३५)। ईदन्ताः पञ्च। आदन्ताः षट्। दुष्टान् पार्दालीकृत्येत्यादि। 'गुलुगुधा पीडायाम्' (स० १. १. १३६)। रिपून् गुलगुधाकृत्य। 'आक्ली विक्ली फली

---

* ईषदर्थे इत्यपि कारिकादिषु पाठः.

1. 'वार्दाली 2. 'कौवास्यालोष्टी' इति मुद्रितसरस्वतीकण्ठाभरणम्।

फल्लु विकारे' (स० १. १. १३७)। एते चत्वारः। परानाक्लीकृत्य। स्वयमाक्लीभूयेत्यादि। 'सजूस्सहार्थे'। (स०१. १. १३८)। तं सजूः कृत्य। तेन सजूर्भूय। 'वषड् वौषट् श्रौषट् स्वाहा स्वधा संप्रदाने' (स० १. १. १३९)। पञ्चापि प्रदानविशेषार्थाः। हविर्वषट्कृत्येयत्यादि। 'प्रादुराविषौ प्राकाश्ये' (स० १. १. १४०)। प्रादुष्कृत्य प्रादुर्भूय। आविर्भूयेत्यादि। ऊर्यादीनां पृथगप्रयोगादाविरिति पृथक्प्रयोगो भ्रान्तिरिति माधवः। प्रादुराविषोर्गतिव्यतिरिक्तयोः स्वरादौ-पाठात् स्यादिति स्वामिमतम्।

अनुकरणं चानितिपरम् (१. ४. ६२)

अनितिपरमनुकरणं गतिसंज्ञम्। खाट्कृत्य पृष्ठं ताते। धक्कृत्य याात। इतौ तु खाडिति कृत्वा॥

आदरानादरयोः सदसती (१. ४. ६३)

द्विजं सत्कृत्य। रिपुमसत्कृत्य॥

भूषणेऽलम् (१. ४. ६४)

अलङ्कृत्य। पतत्सूत्रत्रयं कृञ्येव॥

अन्तरपरिग्रहे (१. ४. ६५)

अन्तःशब्दो गतिः स्यात्। परिग्रहे तु न।

अन्तर्हत्य रिपुं याति मध्ये हत्वेति कथ्यते।
अन्तर्हत्वा धनं याति परिगृह्येति नो गतिः।

कणेमनसी श्रद्धाप्रतीघाते (१. ४. ६६)

कणेहत्य पयः पिबति। मनोहत्य। कणेमनश्शब्दावाभलाषार्थौ। तस्य हतिमवधीकृत्य पिबतीत्यर्थः। उक्तं सूत्रद्वयं हन्तेरेव॥

पुरोऽव्ययम् (१. ४. ६७)

पुर इत्यव्ययं गतिः॥

नमस्पुरसोर्गत्योः (८. ३. ४०.)

एतयोर्विसर्गस्य कुप्वोः परयोः सः स्यात्। पुरस्कृत्य। पुरोधाय ॥

अस्तं च (१. ४. ६८.)

अस्तमित्यदर्शनार्थमव्ययं गतिः स्यात्। अस्तंगत्य। अस्तंकृत्य ॥

अच्छ गत्यर्थवदेषु (१. ४. ६९)

अच्छेत्याभिमुख्येऽव्ययम्। तद् गत्यर्थे वदतौ च गतिसंज्ञम्। अच्छगत्य। अच्छोद्य ॥

अदोऽनुपदेशे (१. ४. ७०)

अदःकृत्य कार्यं करोति। एतदिति निश्चित्येत्यर्थः। उपदेशे तु अदःकृत्वोपदिशति ॥

तिरोऽन्तर्धौ (१. ४. ७१)

तिरोभूय। तिरोधाय ॥

विभाषा कृञि (१. ४. ७२)

तिरःशब्दः कृञि वा गतिः ॥

तिरसोऽन्यतरस्याम् (८. ३. ४२.)

गतेस्तिरसो विसर्गस्य कुप्वोः सो वा स्यात्। तिरस्कृत्य, तिरःकृत्य। अगतित्वे 'ते प्राग्धातोः' (१. ४. ८०) इति नियमः समासश्च न। कृत्वातिरः ॥

उपाजेऽन्वाजे (१. ४ ७३)

दुर्बलस्य बलाधानार्थावेतौ कृञि वा गती। उपाजेकृत्य। अन्वाजेकृत्य। अगतित्वपक्ष ऊह्यः ॥

साक्षात्प्रभृतीनि च (१. ४. ७४.)

एतानि कृञि वा गत्याख्यानि। 'साक्षान्मिथ्याचिन्ताभद्रारोचनामास्थान्धाप्राजर्योप्राजरुहाबीजर्याबीजरुहासंसर्याश्च्व्यर्थे' (स०-

१. १. १५२)। साक्षात्कृत्य, साक्षात् कृत्वा । मिथ्याकृत्य। आमाकृत्य । आस्थाकृत्य। अन्धाकृत्य। प्राजर्याकृत्येत्यादि । अर्थो मृग्यः । 'अर्थेऽग्नौ-वशेविकम्पनेविहसने प्रपतनेशीतंलवणमुदकमुष्णमार्द्रंप्रादुराविर्नमसश्च' (सू० १. १. १५३)। च्व्यर्थे प्राग्वत् स्युः । निपातनादेजन्तत्वं मान्तत्वं च । अर्थेकृत्य । अग्नौकृत्य । शीतं कृत्येत्यादि । प्रादुराविषो-रूर्यादित्वेऽपि च्व्यर्थे कृञि विकल्पायोक्तिः । सातिश्चात्र पाठ्यः -विप्रसात्कृत्य , विप्रसात्कृत्वा ॥

अनत्याधान उरसिमनसी (१. ४. ७५.)

एतौ निधानादन्यत्रार्थे कृञि वा गती । उरसिकृत्य । मनसि-कृत्य । उरसि कृत्वा। मनसि कृत्वा । निश्चित्येत्यर्थः। निधाने तु पाणि-मुरसि कृत्वा शेत इत्येव ॥

मध्ये पदे निवचने च (१. ४. ७६)

एतेऽप्यनिधाने कृञि वा गतयः । सचिवं मध्येकृत्याह नृपः । भृत्यं पदेकृत्य सचिवो गतः । निवचनेकृत्यास्ते मुनिः । मौनं कृत्वे-त्यर्थः । निधाने तु नूपुरं पदे कृत्वा गता ॥

नित्यं हस्ते पाणावुपयमने (१. ४. ७७)

एतौ विवाहेऽर्थे कृञि नित्यं गती । हस्तेकृत्य। पाणौकृत्य । 'हस्ते-कृत्य महास्त्राणी'त्युक्तेः स्वीकारमात्रेऽपीति हरः ।

प्राध्वं बन्धने (१. ४. ७८)

बन्धनकृतानुकूल्येऽर्थे प्राध्वंशब्दः कृञि गतिः । प्राध्वंकृत्य पशुं दोग्धि ॥

जीविकोपनिषदावौपम्ये (१. ४. ७९)

एतावौपम्ये द्योत्ये कृञि गती । जीविकाकृत्य दीव्यति । उपनिषत्कृत्योपादिशति । तत्तुल्यं कृत्वेत्यर्थः । इति ।

---

१. 'प्रतपने' मुद्रितपाठः.

१. 'कृञि वा गती' क. ग. पाठः.

समासोऽप्युपसर्गाणां गतित्वादेव सिध्यति ।
तत्सरूपनिपातानां सिद्ध्यै प्रादेस्तु वर्ण्यते—

स्वती पूजायाम्' (स० ३. २. १५०) । सुपुरुषः । अतिपुरुषः । 'दुर्निन्दा कृच्छ्रार्थयोः'[1] (स० ३. २. १४९) । दुर्जनः । कृच्छ्रेण वशो दुर्वशः । 'आङीषदर्थाभिव्याप्त्योः' (स० ३. २. १५२) । आनीलम् । सर्वतः कुटिलमाकुटिलम् । एवमापीनम् । 'प्रादयो गत्याद्यर्थे प्रथमया' (स० ३. २. १५३) । प्रगत आचार्यः प्राचार्यः । विरुद्धः पक्षो विपक्षः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (स० ३. २. १५४) । अतिक्रान्तो मायामिति विग्रहे—

एकविभक्ति चापूर्वनिपाते (१. २. ४४)

विग्रहे यन्नियतविभक्तिकं तत् प्रथमानिर्दिष्टत्वाभावेऽप्युपसर्जनं स्यात् । नत्वस्य पूर्वनिपातः । इह च मायामतिक्रान्तं मायामतिक्रान्तेनेत्यादिविग्रहेऽपि मायामित्यस्य विभक्तिभेदाभावादेकविभक्तित्वम् ॥

गोस्त्रियोरुपसर्जनस्य (१. २. ४८)

उपसर्जनभूतौ यौ गोशब्दस्त्रीप्रत्ययान्तौ तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमायः । अक्षं प्रतिगतः प्रत्यक्षः । प्रतिगतो मित्यत्र गोः ह्रस्वे —

एच इग्घ्रस्वादेशे (१. १. ४८)

एचो ह्रस्वादेशे कार्ये इगेव ह्रस्वः स्यात् । ओतः सादृश्यादुत्वम् । प्रतिगुः । 'गोस्त्रियो'रित्यत्र 'विभाषा छन्दसि' (१.२.३६) इत्यतो विभाषानुवृत्तेर्धशाटीत्यादावेकविभक्तित्वेऽपि नोपसर्जनह्रस्वत्वम् । अतिलक्ष्मीरति श्रीरित्यादौ स्त्रीप्रत्ययत्वाभावान्न ह्रस्वः । 'अवादयः क्रुष्टाद्यर्थे तृतीयया' (स० ३. २. १५५) । अवक्रुष्टं शब्दितं कोकिलयावकोकिलं वनम् । अनुगतमर्थेनान्वर्थम् । सम्बद्धमर्थेन समर्थम् । सङ्गतमक्षेण समक्षम् । नियुक्तो मुनिना निमुनिः । 'पर्यादयो ग्लानाद्यर्थे

---

१. 'कृच्छ्राकृच्छ्रार्थयोः' मुद्रितपाठः

चतुर्थ्या' (स० ३. २. १५६) । परिग्लानोऽध्ययनाय पर्यध्ययनः । परिश्रान्तोऽध्ययनार्थमित्यर्थमाह हरः । अलं तरुण्यै अलन्तरुणिः । रताय सन्नद्धा संरता । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (स० ३.२. १५७) । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । 'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' (वा० २. १. ४) मेघइव । पद्मामिव । 'उद्देश्यविधेययोरसमासो वाच्यः' । तेन कृष्णः पापहृद् भूयादित्यत्र कृष्णमनूद्य पापहृत्त्वस्य विधेयत्वात् कृष्णपापहृत् इति न ॥

## राजदन्तादिषु परम् (२. २. ३१)

एषु पूर्वप्रयोगार्हमपि परं प्रयोक्तव्यम् । राजदन्तालिप्तवासितसिक्तसंमृष्टहृष्टकुपितभ्रष्टलुञ्चितनग्नमुषितावक्लिन्नपक्कार्पितोतोप्तगाढाधमर्णोत्तमर्णपरःशतपरःसहस्रादिषु परम्' (स० ३. ३. ५९) । दन्तानां राजेत्यग्रगतो दन्तो राजदन्तः । पूर्वं सुरभीकृतं पुनर्लिप्तं च लिप्तवासितम् । त्यक्तत्वाद् भ्रष्टं भ्रष्टलुञ्चितं धनम् । मुषितत्वान्नग्नो नग्नमुषितः । पक्कत्वादवक्लिन्नं अवक्लिन्नपक्कम् । पूर्वमुतोऽर्पितश्चार्पितोतः पटः । जलगाहनं कृत्वा पुनरुप्तमुप्तगाढं बीजम् । एतदन्तेषु स्नातानुलिप्तवत् पूर्वकालस्य पूर्वत्वे प्राप्ते परत्वोक्तिः । ऋणे उत्तम उत्तमर्णः । ऋणे अधम अधमर्णः । शतात्परे परःशताः । परःसहस्राश्च गावः । परं साधिकं शतं परःशतमिति व्युत्पत्तौ तु शतस्य प्राधान्याद् द्वेधा — परःशतं गावः, गवां परःशतम् । एवं परःसहस्रेऽपि । 'बिम्बोष्ठबिम्बाधरपुरुषोत्तमादिषु वा' (स० ३. ३. ६०) ।

ओष्ठबिम्बश्च बिम्बोष्ठ इत्यादि बहुनात्र किम् ।
अदृष्टलक्षणः पूर्वनिपातोऽत्रैव दृश्यताम् ॥

## कडाराः कर्मधारये (२. २. ३८)

कर्मधारये कडाराद्या वा पूर्वं स्युः । कडारगडुलकाणखञ्जकुण्ठखोडखलतिगौरपिङ्गलवृद्धाभिक्षुकवठरतनवः । कडारः पिङ्गः । कुण्ठो

१. 'नायेत्य' क० पाठः.

जारजः । खोडः पङ्गुः । वठरो मूर्खः । तनुरल्पः । कडारांशुकमंशुक-कडारमित्यादि ॥

अथैतत्समासान्ताः —

तत्पुरुषस्याङ्गुलेः सङ्ख्याऽव्ययादेः (५. ४. ८६)

सङ्ख्याव्ययोदरङ्गुल्यन्तस्य तत्पुरुषस्याच् प्रत्ययः स्यात् । यस्य—'(६-४-१४८) इति लोपः । द्वयोरङ्गुल्योस्समाहारो द्व्यङ्गुलम् । अयं सङ्ख्यापूर्वत्वाद् द्विगुसंज्ञः ॥

द्विगुश्च (२. १. २३)

द्विगुसमासोऽपि तत्पुरुषाख्यः । इति तत्पुरुषत्वम् । अव्ययादेस्तु निर्गतमङ्गुलिभ्यो निरङ्गुलम् । अङ्गुलैर्मितमित्यादौ प्रमाणविशेष-वाच्यङ्गुलशब्द एव ॥

अहस्सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः (५. ४. ८७)

एभ्यो रात्रेरच् स्यात् । चकारात् सङ्ख्याव्ययादेश्च ॥

रात्राह्नाहाः पुंसि (२. ४. २९)

एतदन्ताः पुल्लिङ्गा एव । अहःसहिता रात्रिरहोरात्रः । शाकपार्थिवादिः । अयं समाहारद्वन्द्व इति मतेऽपि पुंस्त्वमेवेति केचित् । क्लीबतेति कौमुदी । सर्वरात्रः । एकदेशे—रात्रेः पूर्वभागः पूर्वरात्रः । अपररात्रः । सङ्ख्यातरात्रः । सङ्ख्यातं परिमितम् । पुण्यरात्रः त्रिरात्रः । सङ्ख्यापूर्वस्य रात्रस्य क्लीबतेति केचित् । त्रिरात्रम् । गण-रात्रम् । अव्यये— रात्रिमतिक्रान्तोऽतिरात्रः ॥

राजाहःसखिभ्यष्टच् (५. ४. ९१)

एतदन्तात् तत्पुरुषाट्टच् स्यात् । 'नस्तद्धिते' (६-४-४४) इति टिलोपः । महाराजः । राजानमतिक्रान्तोऽतिराजः । टित्त्वादतिराजी । प्रतिकूलो राजा प्रतिराजेत्यत्र टज्नेष्टः । पूर्वं ङीपि कृते च टज्न । मद्राणां राज्ञी मद्रराज्ञी । 'अह्नष्टखोः—(६-४-१४५)'इति टिलोपः ।

'रात्राह्ने'ति पुंस्त्वम् शुभाहः । 'पुण्यसुदिनाभ्यामह्नः क्लीबता वाच्या' इति । सुदिनाहम् । सुदिनशब्दः प्रशस्तार्थः । कृष्णस्य सखा कृष्णसखः । बहुव्रीहौ तु टच्न । रम्यराजा देशः । दीर्घाहाः कालः । पार्थसखा कृष्णः । सर्वैकदेशादिभ्योऽह्नष्टचि कृते भेदः ॥

अह्नोऽह्न एतेभ्यः (५. ४. ८८)

एतेभ्यः सर्वादिभ्यः परस्याहन्शब्दस्य टचि परेऽह्नादेशः स्यात् । 'अह्नोऽदन्तात्' (८-४-७) इति णः । सर्वाह्णः । 'एकदेशात्—' पूर्वाह्णः, अपराह्णः, मध्याह्नः, सायाह्नः इति । सङ्ख्याताह्नः । पुण्याद्वक्ष्यते । सङ्ख्याव्ययादेस्तु—

अव्ययान्निर्गतमहर्निरह्नो व्यह्न इत्यपि ।
कोः समासे कदह्नः स्यात् संख्यायास्तूच्यते द्विगौ ॥

द्वयोरह्नोर्भवो द्व्यह्नो द्विगोः कालाट्ठञोऽत्र लुक् ।
[1]द्व्यह्नप्रधानं कर्मेति स्यादुत्तरपदद्विगौ ॥

परिमाणिसमासेऽपि त्रिपदत्वं किलेष्यते ।

पूर्वयोर्द्विगुसिद्ध्यर्थं द्व्यह्नजातस्ततो भवेत् ।
द्व्यहजातादि चेह स्यात् समाहारद्विगौ सति ॥

न संख्यादेः समाहारे (५. ४. ८९)

इहाह्नादेशो न । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः ॥

उत्तमैकाभ्यां च (५. ४. ९०)

उत्तमशब्दोऽन्त्यार्थः । अन्त्यात् पुण्यशब्दादेकाच्च परस्याह्नादेशो न । पुण्याहम् । एकाहः । सङ्ख्याताह इत्यपीष्टम् ॥

गोरतद्धितलुकि (५. ४. ९२)

---

१ 'द्य' ग पाठः.

गोशब्दान्तात् तत्पुरुषाट्टच् स्यात् नतु तद्धितलुकि । जरन् गौर्जरद्गवः । स्त्रियां–देवगवी । मधुरा वाक् मधुरगवी । द्विगोरपि–पञ्चगवम् । उत्तरपदद्विगौ – पञ्चगवधनः । तत्र दिक्पूर्वे – पूर्वगवप्रियः । अदिक्सङ्ख्यापूर्वे तु त्रिपदबहुव्रीहौ कपिलगोप्रिय इत्यादि स्यात् । पञ्चगोधन इत्यादि तु नैवेति भेदः । तद्धितलुकि टच्न । पञ्चभिर्गोभिः क्रीतः पञ्चगुः । 'अध्यर्धपूर्वद्विगोः' (५-१-२८) इत्यार्हीयठको लुक् । पञ्चभिः क्रीत इति विग्रहे क्रीतस्यैव कर्मादिविभक्तिभेदाद् गोरेकविभक्तित्वेनोपसर्जनह्रस्वः ॥

अग्राख्यायामुरसः (५. ४. ९३)

मुख्याख्यायामुरोन्तात् तत्पुरुषाट्टच् स्यात् । मुख्यो द्विजो-द्विजोरसम् । उरसः क्लीबत्वात् क्लीबता ॥

अनोऽश्मायस्सरसां जातिसंज्ञयोः (५. ४. ९४)

एतदन्तानां जातौ नाम्नि च टच् स्यात् । उपानसम् । अमृताश्मम् । कालायसम् । मण्डूकसरसमिति जातिः । महानसम् । पिण्डाश्मम् । लोहितायसम् । जलसरसमिति संज्ञा ॥

ग्रामकौटाभ्यां च तक्ष्णः (५. ४. ९५)

टच् स्यात् । बहूनामधीनस्तक्षा ग्रामतक्षः । स्वकुटीस्थितोऽनधीनः कौटतक्षः ॥

अतेः शुनः (५. ४. ९६)

श्वानमतिक्रान्तोऽतिश्वो वराहः । टित्वादतिश्वी सेवा ॥

उपमानादप्राणिषु[1] (५. ४. ९७)

उपमानभूतस्य शुनोऽप्राणिनि वाच्ये टच् । श्वेव स्थाणुः स्थाणुश्वः । 'उपमितं व्याघ्र—' (२-१-५६) इति समासः । प्राणिषु तु श्वेव सेवकः सेवकश्वा ॥

---

१. 'षु च ।' ग. ङ. पाठः.

### उत्तरमृगपूर्वाच्च सक्थ्नः (५. ४. ९८)

एभ्य उपमानाच्च परस्य सक्थिशब्दस्य टच् । उत्तरसक्थम् । पूर्वसक्थं च । तस्योर्ध्वाधोभागौ । मृगस्य सक्थि मृगसक्थम् । उपमानात् — कदलीव सक्थि कदलीसक्थम् । गौर्याः सक्थि गौरिषक्थमिति च माधवः । सुषामादित्वात् षत्वह्रस्वत्वे ॥

### नावो द्विगोः (५. ४. ९९)

नौशब्दान्ताद् द्विगोष्टच् । द्वयोर्नावोः समाहारो द्विनावम् । —अतद्धितलुकि—' (५-४-९२) इत्यधिकारात् पञ्चसु नौषु जातः पञ्चनौः शुल्क इत्यत्र न । द्विगोर्लुग्—' (४·१-८८) इत्यणो लुक् ॥

### अर्धाच्च (५. ४. १००)

अर्धात् परस्य नावष्टच् । नावोऽर्धमर्धनावम् । क्लीबत्वं लोकात् ॥

### खार्याः प्राचाम् (५. ४. १०१)

खार्यन्ताद् द्विगोरर्धात् परायाः खार्याश्च प्राङ्मते टच् स्यात् । द्विखारम् । अर्धखारम् । अन्यमते—द्विखारि । अर्धखारि । द्विगोः क्लीबत्वाद्ध्रस्वः । खार्यर्थे खारशब्दस्यापि सद्भावात् सूत्रं व्यर्थमिति हरः ॥

### द्वित्रिभ्यामञ्जलेः (५. ४. १०२)

द्विगौ टज्वा । द्व्यञ्जलं, द्व्यञ्जलि । त्र्यञ्जलं, त्र्यञ्जलि । तद्धितलुकि न । द्वयोरञ्जल्योर्भवो द्व्यञ्जलिरेव । उत्तरपदेऽपि नेष्टम् । द्व्यञ्जलिप्रियः ॥

### ब्रह्मणो जानपदाख्यायाम् (५. ४. १०४)

जनपदभवत्वोक्तौ ब्रह्मान्ताट्टच् । जनपदपूर्वाद् ब्रह्मण इत्यर्थः । चोलेषु ब्रह्मा चोलब्रह्मः । काशिब्रह्मः ॥

### कुमहद्भ्यामन्यतरस्याम् (५. ४. १०५)

आभ्यां ब्रह्मणः तत्पुरुषे वा टच् । कुब्रह्मः, कुब्रह्मा । महाब्रह्मः, महाब्रह्मा । इति ॥

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (२. ४. २६)

द्वन्द्वे तत्पुरुषे च उत्तरपदवल्लिङ्गं स्यात् । राधापतिः[1] । कृष्णगोप्यौ । *'प्राप्तापन्नालंपूर्वप्रादिसमासेषु नेति वाच्यम्'[2] । प्राप्तो राधां प्राप्तराधः । आपन्नयमुनः । अलंतरुणिः । अतिमायः ॥

तत्पुरुषोऽनञ्कर्मधारयः (२. ४. १९)

नञ्कर्मधारयवर्जितस्तत्पुरुषः ऊर्ध्वं लिङ्गविधिष्वधिक्रियते ।

संज्ञायां कन्थोशीनरेषु (२. ४. २०)

उशीनरराज्ये ग्रामसंज्ञाभूतः कन्थान्तस्तत्पुरुषः क्लीबं स्यात् । सौशमिकन्थम् ॥

उपज्ञोपक्रमं तदाद्याचिख्यासायाम् (२. ४. २१)

उपज्ञोपक्रमान्तस्तत्पुरुषः तदादित्वविवक्षायां क्लीबम् । ब्रह्मण उपज्ञा ब्रह्मोपज्ञं वेदः । तेनादौ ज्ञात इत्यर्थः । एवं ब्रह्मोपक्रमं सृष्टिः । तेनादावुपक्रान्तेत्यर्थः ॥

छाया बाहुल्ये (२. ४. २२)

छायान्तस्तत्पुरुषश्छायावतां बाहुल्ये सति क्लीबम् । बहूनां गृध्राणां छाया गृध्रच्छायम् । रत्नच्छायम् । आयुधच्छायमिति आयुधबाहुल्यमेवेति शङ्करः ॥

सभा राजामनुष्यपूर्वा (२. ४. २३)

---

१. 'तिः । प्रा' क. ग ङ. पाठः.

* 'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः' इति वार्तिकानुपूर्वी काशिकादिषु ।

२. 'यम् । आ' क. ग. पाठः.

राजपूर्वा अमनुष्यपूर्वा च सभा क्लीबम् । राजपर्यायाणामेव । नृपसभम् । क्षितिपसभम् । राज्ञस्तु[1] राजसभा[2] । विशेषाणां च न । पाण्डुसभा । अमनुष्या इत्युपदेवा उक्ताः । रक्षस्सभम् । गन्धर्वसभम् । देवानां तु — देवसभा ॥

अशाला च (२ ४. २४)

अशालार्था सभा तत्पुरुषे क्लीबम् । द्विजसभं — तत्सङ्घः । शालायां तु — मन्त्रसभा ॥

विभाषा सेनासुराच्छायाशालानिशानाम् (२. ४. २५)

एतदन्तानां तत्पुरुषाणां वा क्लीबत्वम् । नृपसेनम् । यवसुरम् । शशिच्छायम् । गोशालम् । शरन्निशम् । विकल्पात् नृपसेनेत्यादि । अबाहुल्ये विकल्पार्थ[3]श्छायाग्रहः । '—अनञ्कर्मधारय' (२-४-१९) इत्यधिकाराद् असेना परमसेनेत्यत्र न क्लीबत्वम् । *'क्रियाव्ययविशेषणानां क्लीबत्वमेकत्वं च वाच्यम्'(२-४-१८)सुखं वसति । स्वः कमनीयम् । क्रियाव्ययोरलिङ्गसंख्यत्वादुक्तिरिति । 'महत्या घासकारविशिष्टेषु पुंवत्त्वमात्वं च वाच्यम्' (वा० ६. ३. ४६) । †महत्या घासो महाघासः । तस्याः क्रिया महाकारः । तया विशिष्टो महाविशिष्टः । 'अष्टनः कपाले हविषि' (वा० ६. ३ ४६) कपाले परे हविषि वाच्येऽष्टन आत् स्यात् । अष्टाकपालः पुरोडाशः । तद्धितार्थे समासः । संस्कृतेऽणो लुक् । 'गवि च युक्ते' (वा० ६-३-४६) गवि परे युक्ते वाच्येऽष्टन आत् स्यात् । अष्टागवं शकटम् । अत्राष्टानां गवां समाहार इति द्विगोर्लक्षणया तद्युक्ते वृत्तिरिति हरः । समाहारमात्रे त्वष्टगवम् ॥

---

१. 'स्तु न । रा' इति केरलवर्मदेवसम्मतः पाठः. २. 'भा । अ' क. ग. पाठः. ३. 'र्थे' क. ग. ङ. च. छ. पाठः.

* 'क्रियाविशेषणानां क्लीबतेष्यते' इति ।

† 'महदात्त्वे घासकरविशिष्टेषूपसङ्ख्यानं पुंवद्वचनं चासमानाधिकरणार्थम्' इति च काशिका ।

### अष्टनः संख्यायामबहुव्रीह्यशीत्योः (६. ३. ४७)

संख्यायामुत्तरपदे अष्टनोरात् स्यात् । अधिका दश द्वादश । शाकपार्थिवादिः । एवं द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । बहुव्रीह्यशीत्योस्तु न । द्वित्राः । द्व्यशीतिः । एकादशेत्यत्र तु 'प्रागेकादशभ्य —' (५-३-४९) इति निपातनादात्वम् ।

### त्रेस्त्रयस् (६. ३. ४८)

त्रेः संख्यायां परतः त्रयस् आदेशः स्यात् । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । बहुव्रीह्यशीत्योर्न । त्रिचतुराः । त्र्यशीतिः ।

### विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् (६. ३. ४९)

अष्टनः त्रेश्चेति सर्वेषां चत्वारिंशदादौ परे पूर्वोक्तं वा स्यात् । द्विचत्वारिंशत्, द्वाचत्वारिंशत् । अष्टचत्वारिंशत्, अष्टाचत्वारिंशत् - त्रिचत्वारिंशत्, त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु । आत्वत्रयसौ प्राक्छतादेवेष्टौ । द्विशतम् । अष्टशतम् । त्रिसहस्रम् ॥

इति तत्पुरुषभागः ॥

---

### शेषो बहुव्रीहिः (२. २. २३)

उक्तसमासेभ्योऽन्यो बहुव्रीहिसंज्ञः ॥

### अनेकमन्यपदार्थे (२. २. २४)

अनेकं सुबन्तमन्यपदार्थे वाच्ये समस्यते । स च समासो बहुव्रीहिसंज्ञः ॥

## सप्तमीविशेषणे बहुव्रीहौ (२. २. ३५)

बहुव्रीहौ सप्तम्यन्तं विशेषणं च पूर्वं प्रयोज्यम् ।

## निष्ठा (२. २. ३६)

बहुव्रीहौ निष्ठान्तं प्राक् प्रयोज्यम् । द्वितीयादिसर्वविभक्त्यर्थेषु बहुव्रीहिः स्यात् । आश्रिता देवा यं स आश्रितदेवः कृष्णः । ऊढरथोऽश्वः । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । अन्त्ययोर्विशेषणस्य प्राङ्निपातः । पूर्वेषु क्तान्तस्य । 'बहुव्रीहिः समानाधिकरणानामेवेति वाच्यम्' (वा० २–२–२४) । तेन रत्नैः शोभास्येत्यादौ न । 'क्वचिद्व्यधिकरणानामपि पद्मजन्माद्यर्थम्' । पद्माज्जन्मास्येति पद्मजन्मा । अम्भोजोद्भूतिः । 'अव्ययानां च वाच्यम्' (वा० २–२–२४) । अन्तर्मुखः । द्रष्टुकामः श्रोतुमनाः । इहापि समानाधिकरणत्वाभावादुक्तिः । 'तुमः, कामे मनस्यपी'ति मलोपः । अनेकमित्युक्तेर्बहूनामपि समासोऽस्ति । तत्र दिक्संख्यापूर्वे त्रिपदबहुव्रीहौ तत्पुरुषमिश्रत्वोक्तेः अन्यत्रैवायं शुद्धः । नीलमुज्ज्वलं वपुर्यस्य सः नीलोज्ज्वलवपुः । बहूनां समासे समानाधिकरणत्वानियमो नेति शृङ्गारे । राधाया अङ्के शयनं प्रियमस्येति राधाङ्कशयनप्रियः । 'बहुव्रीहिर्मत्वर्थे वाच्यः' । तेन भूमाद्यर्थेष्वपीति रामः । धृतधनो वणिक् । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' (वा० २–२–२४) । करे स्थितं धनं यस्य सः करधनः, अत्र सप्तम्याः प्राङ्निपातः । गजमुखमिव मुखं यस्य सः गजमुखः । 'समुदायविकारान्तस्य च तद्वत्'(वा० २–२–२४) । केशसमुदायश्चूडा यस्य सः केशचूडः । स्वर्णविकारो माला अस्य स्वर्णमालः । 'प्रादिभ्यो धातुजस्य वोत्तरपदलोपश्च' (वा० २–२–२४) । प्रपतितपर्णः प्रपर्णः । 'नञ्पूर्वास्त्यर्थानां च तद्वत्' (वा० २–२–२४) । अविद्यमानभार्यः अभार्यः । 'अस्तिक्षीरादयश्च' (वा० २–२–२४) । अस्तिक्षीरा गौः । अस्तिज्ञानः ॥

स्त्रियाः पुंवद् भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु (६. ३. ३४)

भाषितपुंस्कादिति षष्ठ्यर्थे पञ्चमी । अनूङिति षष्ठ्यर्थे प्रथमेति हरः । पुल्लिङ्गसाधारणस्यानूङः स्त्रीलिङ्गशब्दस्य समानाधिकरणे स्त्रीलिङ्गे परे पुंवद्रूपं स्यात् । पूरणान्तस्त्रीलिङ्गे प्रियादिषु च परेषु न । पुंवत्त्वात् स्त्रीप्रत्ययलोपः । 'गोस्त्रियोः'(१-२-४८)इति परपदस्य ह्रस्वः । बहुव्रीहौ ह्यनेकमिति प्रथमानिर्दिष्टत्वात् सर्वपदानामुपसर्जनत्वमेव । चित्रगुः । सुन्दरभार्यः । गर्भिभार्यः[1] । भाषितपुंस्कादित्युक्तेर्गङ्गाभार्य इत्यत्र न । अनूङ इत्युक्तेर्वामोरूभार्यः । पूरण्यां तु —

अप्पूरणीप्रमाण्योः (५. ४. ११६)

पूरण्यन्तात् प्रमाणीशब्दान्ताच्च बहुव्रीहेरप् स्यात् । सुन्दरी पञ्चमी यासां स्त्रीणां ताः सुन्दरीपञ्चमाः स्त्रियः । अन्यपदार्थस्य पूरण्यर्थसजातीयत्व एवं पुंवत्वनिषेधोऽप्प्रत्ययश्च । उक्ते हि पञ्चमी स्त्री । अन्यपदार्थाश्च स्त्रिय एव । अन्यत्र न । सुन्दरपञ्चमीकं गृहम् । प्रियादिषु तु — रम्याप्रियः । दृढाभक्तिः । रम्याकान्तः ।

प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा समा ।
सचिवा चपला बाला तनया दुहिता तथा ॥

क्षान्ता कान्ता वामना स्वा वामा भक्तिः प्रियादयः ।
भक्तिशब्दः प्रसिद्धोऽत्र ग्राह्यो नो सेव्यवाचकः ॥

विदितभक्तिं मामित्यादौ भजनक्रियाविशेषणतया निर्वाह इति रामः ॥

क्यङ्मानिनोश्च (६. ३. ३६)

अनयोः परयोः उक्तविधस्त्रीलिङ्गस्य पुंवद्रूपं स्यात् । सुन्दरमानिनी सा । तस्याः सुन्दरमानीत्वम् । तां सुन्दरीं मन्यमान इत्यर्थः । क्यङ् वक्ष्यते ।

---

१. 'र्यः । भा' ङ. पाठः. २. 'व । अ' ङ. पाठः.

## न कोपधायाः (६. ३. ३७)

पाचिकाभार्यः। रसिकाभार्यः। अत्र तद्धितवुग्रहणं कार्यमिति तद्धितान्तानां ण्वुलाद्यन्तानां च कोपधानामेव पुंवत्त्वनिषेधः। पाका वाला सा भार्यास्येति पाकभार्यः॥

## संज्ञापूरण्योश्च (६. ३. ३८)

अनयोर्न पुंवत्। दत्ताभार्यः। पञ्चमीभार्यः॥

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे (६. ३. ३९)

अरक्तविकारार्थस्य ञिदादितद्धितान्तस्य न पुंवत्त्वम्। माधुरीभार्यः। रक्ते तु—कौसुम्भपटीकः। विकारे—हैरण्यमेखलः। वैयाकरणी भार्या अस्य वैयाकरणभार्य इत्यादौ वृद्धिं निषिध्यैन्विधानाद् वृद्धिनिमित्तत्वाभावात्पुंवत्त्वम्॥

## स्वाङ्गाच्चेतोऽमानिनि* (६ ३. ४०)

स्वाङ्गादीकारान्तस्य न पुंवत्त्वम्। मानिनि परे तु स्यादेव। सुकेशीभार्यः। मानिनि परे तु पुंवत्त्वमेव। सुकेशमानिनी॥

## जातेश्च (६. ३. ४१)

जातेर्न पुंवत्त्वम्[१]। ब्राह्मणीभार्यः। अमानिनीत्येव। ब्राह्मणमानिनी। 'भस्याढे—'(वा० ६. ३. ३५) इत्यत्र जातेः पुंवत्त्वमेव। हस्तिनीनां समूहोऽपि हास्तिकम्। 'न कोपधायाः (६. ३. ३७) इत्याद्याः पुंवत्त्वनिषेधाः तसिलादिषु क्यङ्मानिनोरप्यूह्याः॥

## पुंवत् कर्मधारयजातीयदेशीयेषु (६. ३. ४२)

एषु भाषितपुंस्कादनूङ्[२]स्त्रियाः प्रतिषेधविषयेऽपि पुंवत्त्वं स्यात्। तत्र कोपधादौ— रसिका नारी रसिकनारी। रसिकजातीया। रसिकदेशीया। एवं दत्तवृन्दारिका। पञ्चमभार्या। माधुरवधूः। सुकेशतरुणी। ब्राह्मणवनितेति। 'अपूरणीप्रियादिष्विति निषेधोऽप्यत्र ने'ति

---

१. 'पुंस्त्वनि' क. ग. ङ. पाठः.

* काशिकानुसारी सूत्रपाठोऽयम्। भाष्ये तु 'स्वाङ्गाच्चेत' इत्येव पाठः, 'अमानिनीति वार्तिकं सूत्रे संयोजितम्' इति केरळवर्मदेवाः. २. 'नूङः स्त्रि' इति च केरळवर्मदेवाः.

हरः । महानवमी । कृष्णचतुर्दशी । सुन्दरप्रिया । 'सर्वनाम्नो वृत्तिमात्रे पुंवत्त्वं वाच्यम् ।' (वा० २. १. ५१) वृत्तिः समासादिः । अन्यस्यां सक्तोऽन्यसक्तः । भवत्याः पतिर्भवत्पतिः इति ॥

सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये (२. २. २५)

अव्ययादयस्सङ्ख्येयेऽर्थे सङ्ख्यया समस्यन्ते, स च बहुव्रीहिसंज्ञः ॥

बहुव्रीहौ सङ्ख्येये डजबहुगणात् ५. ४. ७३)

सङ्ख्येये बहुव्रीहेः डच् स्यात् । बहुगणाभ्यां तु न । डित्त्वाट्टिलोपः । दशानां समीपगता उपदशा विप्राः । उपविंशाः । आसन्नविंशाः । अदूरत्रिंशाः । एषामेकोनत्वमेकाधिकत्वं वार्थः । अधिकचत्वारिंशाः । अत्रैकाधिकत्वमेव । सङ्ख्या तु संशयार्थे सुजर्थे च समस्यते । द्वौ त्रयो वा सङ्ख्या येषां ते द्वित्राः । द्विरावृत्तदशसङ्ख्या द्विदशा विप्राः । विंशतिरित्यर्थः । एवं त्रिदशाः । बहुगणाभ्यां तु न डच् ॥

त्वां हत्वोपबहून् कुर्वे कुरूनेवं गणादपि ।
पूर्वस्मादूनसङ्ख्यानित्यर्थोऽन्त्यस्य स्वरे भिदा ॥

'अव्ययादेः सङ्ख्यान्तात् तत्पुरुषादपि डजि'ति रामः । निरादयः क्रान्ताद्यर्थे । त्रिंशतो निर्गतानि निस्त्रिंशानि वर्षाण्यस्य । निश्चत्वारिंशानि । ततोऽधिकानीत्यर्थः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः । खड्गः ॥

दिङ्नामान्यन्तराले (२. २. २६)

दिशां[1] नामानि मध्ये वाच्ये समस्यन्ते । 'सर्वनाम्नो वृत्तिमात्रे—' (वा० २. १. ५१) इति पुंवत्त्वम् । दक्षिणपूर्वा दिक् । तयोर्मध्यमित्यर्थः । नामशब्दोक्तेः ऐन्द्र्यादिशब्दानां न समासः ॥

---

१. 'दिङ्ना' ग. पाठः.

तत्र तेनेदमिति सरूपे (२. २. २७)

तत्र गृहीत्वेदमित्यर्थे तेन प्रहृत्येदमित्यर्थे च सरूपे पदे मिथः समस्येते, स च बहुव्रीहिसंज्ञः। युधि परस्परकरणे द्योत्य एवेति भोजसूत्रे ॥

अन्येषामपि दृश्यते (६. ३. १३७) ॥

अन्येषां भाषायामपि दीर्घो दृश्यते ॥

इच् कर्मव्यतीहारे (५. ४. १२७)

कर्मव्यतीहारः परस्परकरणम्। तदर्थाद् बहुव्रीहेः समासान्त इच् स्यात्। तिष्ठद्गुप्रभृतिषु पाठादिचोऽव्ययत्वम्। मिथः केशेषु केशेषु च गृहीत्वा प्रवृत्तं युद्धं केशाकेशि। मिथो दण्डैश्च दण्डैश्च प्रहृत्य प्रवृत्तं युद्धं दण्डादण्डि। 'अन्येषामपि दृश्यते' (६. ३. १३७) इत्युक्त्या यथादर्शनं क्वचिद् दीर्घत्वमात्रं[2] च वा स्यात्। अजादौ तु न स्यात्। मुष्टामुष्टि, मुष्टीमुष्टि,। 'ओर्गुणः' (६. ४. १४६) बाहाबाहवि, बाहूबाहवि। अचि परे तु असयसि। 'युद्धनियमो नास्ती'ति शृङ्गारे। मिथो हस्ते च हस्ते च गृहीत्वा चरन्ति हस्ताहस्ति चरन्ति ॥

तेन सहेति तुल्ययोगे (२. २. २८)

सहेत्येतत् तुल्ययोगे द्योत्ये तृतीयान्तेन समस्यते, स च समासो बहुव्रीहिसंज्ञः ॥

वोपसर्जनस्य (६. ३. ८२)

सर्वोपसर्जनस्य समासस्य सहशब्दो वा सत्वं प्राप्नोति। पुत्रेण सहेत्यर्थे सपुत्रः सहपुत्रो वागतः। अत्रागमनयोगो द्वयोस्तुल्यः। तुल्ययोगोक्तिः प्रायिकी। सकर्मकः। सलोमकः। अत्रापि बहुव्रीहेः

---

१. 'न्ता' क. ग. छ. पाठः. २. 'ष्टि। बाहु' क. ग पाठः.

सङ्ख्येये वाच्ये डच् । साष्टं शतम् इति । 'सर्वनामसंख्ययोः बहुव्रीहौ प्राङ्निपातो वाच्यः' वा० (२. २. ३५) । सर्वश्वेतः । [1]शुक्लः । 'मिथोऽनयोः समासे संख्या पूर्वं स्यात्' (वा० १. २. ३५)। ध्यन्यः । 'सङ्ख्याया अल्पीयस्याः' (वा० २. २. ३५) । द्वित्राः, पञ्चषाः । 'वा प्रियस्य' । (वा० २. २. ३५) कृष्णप्रियः । प्रियकृष्णः। सप्तम्याः प्राङ्निपाते 'नेन्द्वादिभ्यः' (स० ३.३.९६) इति भोजः । मौलाविन्दुरस्येतीन्दुमौलिः । शशिशेखरः । पद्मनाभः । 'गड्वादिभ्यो वा' (स० ३. ३, ९५) इति च । कण्ठेगडुः । गडुकण्ठः । मध्येगुरुर्जगणः गुरुमध्यः । अन्तेगुरुः गुर्वन्तः । वहेगडुरिति नित्यम् । एष्वाद्यन्तयोः स्वाङ्गादलुक् । अन्ययोश्च वक्ष्यते । 'जातिकालसुखादिभ्यो निष्ठा परा-वाच्या' (वा० २. २.३६) । पलण्डुभक्षितः । सुरापीतः । नरनिहतः । दिनजातः । 'सुखादिभ्यः कर्तृवेदनायाम्' (३.१.१८) इत्यत्र सुखादि-र्वक्ष्यते । सुखजातः । दुःखजातः । वेति भोजः । भक्षितपलण्डुः । पीतसुरः । जातदिनः । जातसुखः । जातेः पूर्वता कृतकटादौ क्वचिन्न । 'प्रहरणार्थात् परे निष्ठासप्तम्यौ' (वा० २.२.३७) । अस्युद्यतः । दण्डपाणिः । उद्यतासिरित्याद्यपि दृश्यते । कुम्भहस्तादावप्रहरणाद प्याह शाङ्करः ।

## वाहिताग्न्यादिषु (२. २. ३७)

एषु निष्ठाया वा पूर्वता स्यात् । 'आहिताग्निजातपुत्रजातदन्तजातश्मश्रुपीतघृतपीततैलपीतमद्यपीतविषोढभार्यगतार्थच्छिन्नशीर्षादिषु वा' (स० ३.३.१००) । वेत्युक्तेः अग्न्याहितः । पुत्रजातः । इत्यादि । आद्युक्तेः दधिपीतः । पीतदधिकः इत्यादि । पुत्रहतः पुत्रजग्धश्च राजदन्तादिष्विति माधवः । हतजग्धपरस्य पुत्रस्य क्षेपे 'अनचि च' (८.४.४७) इति द्वित्वं वा वाच्यम् । तेन द्वित्वं विनापि । अक्षेपे तु द्वित्वमेव इति ॥

अथ समासान्ताः—

---

१. 'खः पू' ग. पाठः.

## बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (५. ४. ११३)

स्वाङ्गार्थयोरनयोः बहुव्रीहौ समासान्तः षच् स्यात् । दीर्घसक्थः । आयताक्षः । षित्त्वाद्‌यताक्षी । स्वाङ्गादित्युक्तेः स्थूलाक्षा वेणुयष्टिरि-त्यत्र 'अक्ष्णोऽदर्शनात्' (५.४.७६) इति वक्ष्यमाणोऽजेव । ङीष् नेति भेदः । वेण्वादेः पर्वस्वङ्कुरस्थानमाक्षि ॥

## अङ्गुलेर्दारुणि (५. ४. ११४)

अङ्गुल्यन्ताद् बहुव्रीहेः वृक्षे वाच्ये षच् स्यात् । पञ्च अङ्गुलयो ऽस्येति पञ्चाङ्गुल एरण्डः । अङ्गुलितुल्या दलांशास्तस्याङ्गुलयः[1] । अदारुणि—पञ्चाङ्गुलिर्हस्तः ॥

## द्वित्रिभ्यां ष मूर्ध्नः (५. ४. ११५)

द्विमूर्धः । त्रिमूर्धः । षित्त्वाद् द्विमूर्धी । 'अप्पूरणीप्रमाण्योः' (५.४.११६) इत्यप् । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । 'नक्षत्रात्[2] परस्य नेतुरप् वाच्यः' (वा० ५.४.११६) । पुष्यो नेताधिपतिरिति पुष्यनेत्रा रात्रिः । 'सुमन्त्रनेत्रेण रथेने'ति भट्टिः । 'मासाद् भृतिप्रत्य-यपूर्वात् ठञ् वाच्यः' (वा० ५.४.११६) पञ्च भृतिमान् मासोऽस्येति पाञ्चकमासिको भृत्यः । 'संख्याया अतिशत्–'(५.१.२२) इति कन् ॥

## अन्तर्बहिर्भ्यां च लोम्नः (५. ४. ११७)

आभ्यां लोम्नोऽप् स्यात् । अन्तर्लोमं चर्म । बहिर्लोमम् ॥

## अञ् नासिकायाः संज्ञायां नसं चास्थूलात् ॥ (५. ४. ११८)

अस्थूलपूर्वान्नासिकान्ताद् बहुव्रीहेर्नाम्न्यच् स्यात् । नासिका च नसभावं भजते । गोनसः । कुम्भीनसः । गोनासस्तु नासाशब्दात्

१. 'लास्तस्या' ग. पाठः. २. 'तिरस्या इति पु' इति केरळवर्मदेवाः.

न नासिकायाः । स्थूलात् तु स्थूलनासिक एव । 'खुरखराभ्यां नस्भावोऽच् तु वा वाच्यः' । खुरतुल्या विकटा नासिका अस्येति खुरणाः । खुरणसः । खरा भीषणा खरबद्धा नासिकास्य खरणाः खरणसः । 'पूर्वपदात् संज्ञायाम्' (८.४.३) इति णः ॥

उपसर्गाच्च (५. ४. ११९)

उपसर्गान्नासिकाया असंज्ञायामप्यच् नस्भावश्च स्यात् । उन्नसं मुखम् ॥

उपसर्गाद् बहुलम्* (८. ४. २८)

प्रादिस्थान्निमित्तादुत्तरस्य नसो नस्य बहुलं णः स्यात् । प्रणसः । प्रनसः । 'वेः खुखग्रा' (स० ५.४.१४७) इति भोजः । विगतनासिको विखुः । विखः । विग्रः ॥

सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठ-पदाः (५. ४. १२०)

एतेऽजन्ताः । शोभनं प्रातः शकुनाद्यस्येत्यत्रेति वा सुप्रातो नरः । सुप्रातं दिनम् । एवं सुश्वो धार्मिकः । शोभनं दिवात्रेति सुदिवो हिमकालः । शुकीवत् कुक्षिरस्येति शारिकुक्षः । प्रोष्ठो गौस्तस्येव पादा अस्येति प्रोष्ठपदः । 'भद्रपदे'ति च भोजः । भद्रश्च गौः ॥

नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् (५. ४. १२१)

एभ्यो हलिसक्थ्योरज् वा । अहलः , अहलिः । असक्थः , असक्थिः । एवं दुःसुभ्यामपि ॥

हलिसक्थ्योरिति त्वेके पठन्तीति हरोऽब्रवीत् ।

---

*'उपसर्गादनोत्परः इति सूत्रं भङ्क्त्वा भाष्यकृतैवं सूत्रितम्' इति केरलवर्म-देवटिप्पणी

सुसक्थो वा सुसक्थिर्वा यज्ञसक्थिः किङ्कराणिः ॥

नित्यमसिच् प्रजामेधयोः (५. ४. १२२)

नञ्दुःसुभ्योऽनयोर्नित्यमसिच् स्यात् । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः । 'अन्यत्राप्यस्तीति[1] वृत्त्युक्त्या 'मन्दाल्पाभ्यां च मेधायाः'(स० ५. ४. १४४)इति भोजवर्द्धमानोक्त्या च मन्दमेधाः । अल्पमेधाः ॥

धर्मादनिच् केवलात् (५. ४ १२४)

केवलात् पदात्परो यो धर्मशब्दस्तदन्तादनिच् स्यात् । शुभधर्मा । केवलादित्युक्तेः परमः स्वो धर्मोऽस्येति परमस्वधर्मः । हरिभक्तिधर्मेत्यादौ हरिभक्तिर्धर्मोऽस्येति पूर्वपदस्यैकार्थ्यात्[2] स्यात् ।

जम्भा सुहरिततृणसोमेभ्यः (५. ४. १२५)

बहुव्रीहौ स्वादिभ्यः परो जम्भशब्दः जम्भेति नान्तः स्यात् । जम्भशब्दो भोज्यार्थो दन्तविशेषार्थश्च । शोभनं भक्ष्यं दन्तो वास्य सुजम्भा । हरितवर्णपर्णादिभुग्वा तद्वर्णदन्तो वा हरितजम्भा । तृणजम्भा सोमजम्भा च तद्भक्षः । तृणवत् कृशः सोमवत् सितश्च दन्तोऽस्येति वा ॥

दक्षिणेर्मा लुब्धयोगे (५. ४. १२६)

व्याधसम्बन्धे सति दक्षिणेर्मेति स्यात् । दक्षिणे भागे व्याधकृतमीर्मं व्रणमस्येति दक्षिणेर्मा मृगः । 'बाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा' इति हिंसकमात्रेऽस्तीति हरः[3] ।

द्विदण्ड्यादिभ्यश्च (५. ४. १२८)

एषां सिद्ध्यर्थमिच् स्यात् । द्वेर्दण्डमुसलाभ्यां क्रियायाम्* (स०५-४-१५५) । क्रियायामन्यपदार्थे द्वेः पराभ्यां दण्डमुसलाभ्यामिच्

---

१. 'अन्यत्रापि भवतीति' इति मुद्रितकाशिका

२. 'क्रेऽप्यस्ती'ति क. ग. 'त्रयोगेऽप्यस्ती'ति ङ. पाठः.

३. 'शङ्करः' क. ग. पाठः.

*'क्रियायां द्वेर्दण्डमुसलाभ्याम्' इति मुद्रितपाठः.

स्यात् । इचोऽव्ययत्वमुक्तम् । द्वौ दण्डावत्रेति द्विदण्डि प्रहारः । क्रियाविशेषणत्वेन द्विदण्डि प्रहरन्ति । एवं द्विमुसलि । 'उभोभयाभ्या-मञ्जलिपाणिहस्तदन्तकर्णेभ्यः' (स० ५. ४. १५४) क्रियायामित्येव । उभाञ्जलि वदन्ति । द्विरञ्जलिं बद्ध्वा नृपं वदन्तीत्यर्थः । 'अन्येषामपि दृश्यते' (६.३.१३६) इति दीर्घ उक्तः । उभापाणि गृह्णाति । उभाहस्ति ददाति । उभादन्ति हन्ति दन्ती । उभाकर्णि शृणोति । एवमुभयाञ्जलि उभयापाणीत्यादि । 'बाहोर्लुक्' (स० ५.४.१५५) । उभोभयाभ्यां पराद् बाहोरिचो लुक् स्यात् । प्राग्वद्दीर्घः । उभाबाहु युध्यन्ते । उभयाबाहु युध्यन्ते । प्रत्ययलक्षणेनाव्ययत्वम् । 'संहतपुच्छ्येक-पद्याढ्यपद्यादयः' (स० ५.४-१५६) । संहतं पुच्छमस्यां क्रिया-यामिति संहतपुच्छि धावति श्वा । एकपदि तिष्ठति । आढ्यपद्यास्ते । निपातनाद्दीर्घः । 'प्रोह्यपदि निकुच्यकर्णि च' । (स० ५.४.१५७) अनयोः मयूरव्यंसकादितत्पुरुषयोरिच् । जानुनि पीठादौ वा क्वचित् पादमारोप्यास्ते प्रोह्यपद्यास्ते । एवं कर्णौ संकोच्य निकुच्यकर्णि धावति श्वा ॥

प्रसंभ्यां जानुनो ज्ञुः ॥ ५- ४- १२९ ॥

आभ्यां जानुशब्दस्य बहुव्रीहौ ज्ञुरादेशः स्यात् । प्रगतेऽति-विश्लिष्टे जानुनी अस्य प्रज्ञुः । संश्लिष्टजानुः संज्ञुः । जानुनोर्द्वित्वाद् 'जानुनोर्ज्ञुरिति पाठमाह हरः ॥

ऊर्ध्वाद्विभाषा ( ५- ४- १३० )

ऊर्ध्वज्ञुः, ऊर्ध्वजानुः ॥

ऊधसोऽनङ् ॥ ५. ४. १३१ ॥

ऊधोन्तस्यानङादेशो ङित्त्वादन्त्यस्य सस्य सः ।

---

१. 'राः' क, ग, च पाठः· २. 'पीतीञ्चि दीं' ङ, पाठः.

अन्त्यो ह्यकार उक्त्यर्थः पूर्वस्य स्यादतो गुणे ॥

घटोधन् ।

बहुव्रीहेरूधसो ङीष् (४. १. २५)

ऊधोन्ताद् बहुव्रीहेः स्त्रियां ङीष् स्यात् । 'अल्लोपोऽनः (६.४. १३४) घटोध्नी । स्त्रियामेवानाङिष्टः । अस्त्रियां महोधो गोगणः ॥

धनुषश्च (५. ४. १३२)

धनुरन्तस्याप्यनङ् । धृतं धनुरनेन धृतधन्वा ॥

वा संज्ञायाम् (५. ४. १३३)

शतधन्वा, शतधनुः । 'धृतधनुषि धैर्यशालिनी'[1]त्याद्यसंज्ञात्वाद-युक्तमिति वामनः ॥

जायाया निङ्[2] (५. ४. १३४)

जायान्तस्य निङ् स्यात् । ङित्त्वादातः । लोपो व्योः (६.१. ६६) इति यलोपः । रमा जाया अस्य रमाजानिः ॥

गन्धस्येदुत्पूतिसुसुरभिभ्यः (५. ४. १३५)

एभ्यो गन्धस्यान्तादेश इत् स्यात् । उद्गन्धिर्माला । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । आगन्तुकस्य गन्धस्य न । सुगन्धं वासः । *'आगन्तोर्वे'ति भोजः । तेन सुगन्धि वास इत्यपि । दुर्गन्धिः कायः इवु दुर्लभ इति वामनः । 'उपमानाच्च' (५.४.१३७) इति चकारात् साध्य इति भावः ॥

अल्पाख्यायाम् (५. ४. १३६)

---

१. 'स्यायसु' ग. पाठः. २. 'निङ् । ङित्वा' क. ग. पाठः.

* सूत्रमिदं मुद्रितसरस्वतीकण्ठाभरणे न दृश्यते ।

अल्पार्थस्य गन्धस्येत् स्यात् । सूपस्य गन्धो लेशोऽस्मिन् इति सूपगन्धिरोदनः । यौवनगन्धि गात्रम् । भोजमतेऽत्रापि विकल्पात् सूपगन्धम् ॥

उपमानाच्च (५. ४. १३७)

उपमानात् परस्य गन्धस्येत् स्यात् । पद्मस्येव गन्धोऽस्येति पद्मगन्धि । भोजमते वा । पद्मगन्धः ॥

पादस्य लोपोऽहस्त्यादिभ्यः (५. ४. १३८)

हस्त्यादिवर्जितादुपमानात् परस्य पादस्यान्त्यलोपः स्यात् । व्याघ्रपात् । हस्त्यादेस्तु—हस्तिपादः अश्वपादः जालपाद इत्यादि ॥

कुम्भपदीषु च (५. ४. १३९)

कुम्भपद्यादिषु स्त्रियां पादस्यान्त्यलोपो नित्यं ङीप् च निपात्यते । ङीपि भत्वात् पद्भावः । 'कुम्भजालैकशतसूत्रस्थूणाम्रुनिशित्याद्रगोधाकलशीदासीभ्यः (स० ५.४.१६५) । 'विष्णुकृष्णगुणद्रोणीशकृत्सूकरशुचिसूचिविनञ्निरष्टाभ्यश्च' (स० ५.४.१६६) । कुम्भवत् पादोऽस्याः कुम्भपदी । विष्णोः पादोऽस्याः कारणत्वेनास्तीति विष्णुपदी । कृष्णपादोऽस्याः प्राप्यत्वेनास्तीति कृष्णपदी व्याख्या । विपदी । अपदी । निष्पदी । अष्टापदी । 'अष्टाभ्य' (७.१.२१) इति निर्देशाद् दीर्घः ॥

संख्यासुपूर्वस्य (५. ४. १४०)

पादस्यान्त्यलोपः स्यात् । द्विपात् । सुपात् ॥

वयसि दन्तस्य दतृ (५. ४. १४१)

संख्यासुपूर्वस्य दन्तस्य वयसि द्योत्ये दत्रादेशः स्यात् । ऋकार उगित्त्वार्थः । द्विदन् । चतुर्दन् । सुदन् । वयसीत्युक्तेः द्विदन्तः करीत्यत्र न ।

---

१. 'न्त' क. ङ. पाठः. २. 'जालशत', ३. 'कृष्णकुणिगुण', ४. 'रसूचीशुचि' इति च मुद्रितसरस्वतीकण्ठाभरणपाठः. ५. 'न्त' क. ङ. पाठः.

स्त्रियां संज्ञायाम् (५. ४. १४३)

अयोदती नाम काचित् । उगित्त्वान्ङीप् ॥

विभाषा श्यावारोकाभ्याम् (५. ४. १४४)

आभ्यां परस्य दन्तस्य नाम्नि वा दतृ स्यात् । अनाम्न्यप्याह भोजः । श्यावः कृष्णारुणः । अरोको निर्दीप्तिर्नीरन्ध्रो वा । श्यावदन्, श्यावदन्तः । अरोकदन्, अरोकदन्तः ॥

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च (५. ४. १४५)

एभ्यो दन्तस्यानाम्न्यपि वा दतृ स्यात् । शिताग्रदन्, शिताग्रदन्तः । एवं शुद्धदन् इत्यादि । चकारादहिमूषिकाशिखरेभ्यश्च । अहिदन्, अहिदन्तः इत्यादि । शिखरं धवळारुणं रत्नम् । चकारात् सुदती[1]त्याद्यप्याह वामनः ॥

ककुदस्यावस्थायां लोपः (५. ४. १४६)

अवस्थायां द्योत्यायां ककुदस्यान्त्ये[2]लोपः स्यात् । अजातककुद् वृषः । पूर्णककुत् ॥

त्रिककुत् पर्वते (५. ४. १४७)

त्रिकूटाद्रिरयम् ॥

उद्विभ्यां काकुदस्य (५. ४. १४८)

लोपः स्यात् । काकुदं तालु । उत्काकुत् । विकाकुत् ॥

पूर्णाद्विभाषा (५. ४. १४९)

पूर्णकाकुत्, पूर्णकाकुदः ॥

सुहृद्दुर्हृदौ मित्रामित्रयोः (५. ४. १५०)

---

१. 'त्यप्या' क. ग. ङ. च. पाठः. २. 'न्त' क. ङ. पाठः.

अन्यत्र सुहृदयः, दुर्हृदयः ॥

उरःप्रभृतिभ्यः कप् (५. ४. १५१)

एभ्यो बहुव्रीहौ नित्यं कप् स्यात् । 'उरःसर्पिर्दधिमधूपानच्छालिभ्यः' (स०५-४-१७७)। दृढोरस्कः । प्रियसर्पिष्कः । प्रियदधिकः । प्रियमधुकः । धृतोपानत्कः । बहुशालिकः । 'पुमनडुन्नौर्वयोलक्ष्मीभ्य एकत्वे' (स०-५-४-१७८) प्रिय एकः पुमानस्याः प्रियपुंस्का । एवं स्वनडुत्कं गोष्ठम् । सुनौका नदी । पूर्णमेकं वर्षमस्य पूर्णवयस्को बालः । प्रियलक्ष्मीको हरिः । अत्र केऽणः (७.४.१३) इति ह्रस्वे प्राप्ते —

न कपि (७. ४. १४)

कपि परेऽणो न ह्रस्वः । अनेकत्वे भावी विकल्पः । द्विपुमान् । द्विपुंस्कः । 'नञोऽर्थात्' (सं ५.४.१७९) । अनर्थकम् ॥

इनः स्त्रियाम् (५. ४. १५२)

इन्नन्ताद् बहुव्रीहेः स्त्रियां नित्यं कप् स्यात् । बहुवाग्मिका सभा । अस्त्रियां तु बहुवाग्मी मठः ॥

नद्यृतश्च (५. ४. १५३)

नद्यन्तादृदन्ताच्च बहुव्रीहेर्नित्यं कप् स्यात् । बहुनारीकः । बहुवधूकः । अनयोः 'न कपि' (७ ४-१४) इत्यह्रस्वः । कप्युपसर्जनह्रस्वोऽपि नेष्टः । ऋदन्तात् बहुकर्तृकः ॥

शेषाद् विभाषा (५. ४. १५४)

प्रागनुक्तसमासान्ताद् बहुव्रीहेः कब्वा स्यात् । प्रियकृष्णकः । प्रियकृष्णः ॥

आपोऽन्यतरस्याम् (७. ४. १५)

---

१. 'पयो' मुद्रितपाठः.

आबन्तस्य कपि ह्रस्वो वा स्यात् । बहुमालकः बहुमालाकः । कबभावे बहुमालः । अनाबन्तस्यापि ह्रस्वो वेति कौमुदी । सुसोमपकः, सुसोमपाकः ॥

न संज्ञायाम् (५. ४. १५५)

नाम्नि बहुव्रीहौ कब्न । विश्वयशाः ॥

ईयसश्च (५. ४. १५६)

ईयसन्ताद् बहुव्रीहेः कप् न । बहवः श्रेयांसोऽस्य बहुश्रेयान् । बह्व्यः प्रेयस्योऽस्य बहुप्रेयसी कृष्णः । 'ईयसो बहुव्रीहेर्न ह्रस्व' इत्युपसर्जनह्रस्वाभावः ॥

वन्दिते भ्रातुः (५. ४. १५७)

प्रशस्तार्थे भ्रातुः कब्न । शोभनो भ्राताऽस्य सुभ्राता । अन्यत्र मूर्खभ्रातृकः ॥

नाडीतन्त्र्योः स्वाङ्गे (५. ४. १५९)

स्वाङ्गार्थयोरनयोः बहुव्रीहौ कब्न । बहुनाडिः कायः बहुतन्त्रीः । द्वौ सिरार्थौ । नाड्या 'गोस्त्रियोः—'(१. २ ४८) इति ह्रस्वः । तन्त्र्याः स्त्रीप्रत्ययत्वाभावान्न ह्रस्वः । अस्वाङ्गे तु बहुतन्त्रीका वीणा ॥

निष्प्रवाणिश्च (५. ४. १६०)

कबभावो निपात्यते । निर्गता प्रवाणी वानशलाकास्मादिति निष्प्रवाणिर्नेत्रपटः । चकारादन्तर्व्याता वाण्यस्येत्यन्तर्वाणिः ॥

॥ इति बहुव्रीहिभागः ॥

---

चार्थे द्वन्द्वः (२. २. २९)

अनेकं सुबन्तं चार्थे समस्यते, स च द्वन्द्वाख्यः । समुच्चयादयश्चत्वारश्चार्थाः ।

समुच्चयः क्रियायोगः संहतत्वमतिं विना ।
कृष्णश्च राघवश्चाभूत्तावुभौ नहि संयुतौ ॥

तत्रैकस्याप्रधानत्वेनान्वयोऽन्वाचयः स्मृतः ।
राजानं पुराशिल्पं च द्रष्टुं यामः पुरीमिति ॥

इतरेतरयोगस्तु संहतत्वे सति द्वयोः ।
समाहारश्च सङ्घातः समासोऽत्रान्त्ययोर्मतः ।'

तत्रेतरेतरयोगे—कृष्णार्जुनौ क्रीडतः । अनयोः स्वतः संहतत्वमस्ति । बुद्धिकृते तु संहतत्वे कृष्णराघवौ वन्दे इत्यपि स्यात् । अनेकमित्युक्तेर्बहूनामपि द्वन्द्वः । कृष्णभीमार्जुना यान्ति ॥

शेषो घ्यसखि (१. ४. ७)

अनदीसंज्ञमिदुदन्तं घिसंज्ञं स्यात् , न तु सखिशब्दः ॥

द्वन्द्वे घि (२. २. ३२)

द्वन्द्वे घिसंज्ञं प्राक् प्रयोग्यम् । हरिश्च हरश्च हरिहरौ । अनेकेषां प्राप्तावेकस्य पूर्वत्वनियमः अन्यद् यथेष्टम् । हरिगुरुहराः । हरिहरगुरवः ।

अजाद्यदन्तम् (२. २. ३३)

अजादिकमदन्तं च द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ । बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः । घेरजाद्यदन्तस्य च समासे घेः परत्वम् । इन्द्राग्नी । इन्द्रवायू ॥

अल्पाच्तरम् (२. २. ३४)

अल्पाच्कं द्वन्द्वे प्राक् स्यात् । कृष्णशङ्करौ । अत्रापि बहुष्वनियमः । शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः । 'लघ्वक्षरं पूर्वम्' । हरकृष्णौ । 'अभ्यर्हितं च' । वासुदेवफल्गुनौ । अभ्यर्हितत्वविवक्षायां सर्वविधिबाधेन प्राङ्निपातो ज्ञेयः । न नरनारायणादिषु (स०३.३.७९)

१. 'हि', २. 'सङ्ख्यातः' ग. पाठः. ३. 'योः स्मृतः' क. पाठः. ४. 'च्तरं' क. ग. पाठः.

इति भोजः । वर्णानामानुपूर्व्येण । ब्राह्मणक्षत्रियविट्शूद्राः ऋतुनक्षत्राणां च तुल्याक्षराणाम् । हेमन्तशिशिरौ । कृत्तिकारोहिण्यौ । अतुल्याक्षराणां न क्रमः । ग्रीष्मवसन्तौ । अन्यत्रापि क्रमवतां क्रमेणैवेष्टम् । फाल्गुनचैत्रौ मासौ । एकादशीद्वादश्यौ । 'भ्रातृषु ज्यायसः ।' युधिष्ठिरार्जुनौ ।

द्वन्द्वे घीत्याद्यनित्यं स्याद् वनागिर्योर्युवाल्पयोः ।
आक्रोशदैन्ययोः स्थूलबलयोरिति वर्णनात् ॥

राजदन्तादिषु दम्पती जम्पतीति जायाया दम्भावजम्भावौ निपात्येते । जं दमिति च जायार्थेऽव्ययद्वयमित्यन्ये । तेन जम्भावो जायात्वमित्याद्यपि । इति ।

अथ समाहारद्वन्द्वः —

इतरेतरयोगेऽपि समुदायः प्रकल्प्यते ।
समाहारोऽप्यसावेवं तद्भेदस्तु हरोदितः ॥

आद्ये तु संहता वाच्यास्तेन द्विवचनादयः ।
समाहारे तु सङ्घातो वाच्यस्तेनैकतैव हि ॥

एकवद्भूतानां क्लीबत्वनियमात् क्लीबत्वम् । स्त्रीणां पुरुषाणां च समाहारः स्त्रीपुरुषम् ॥

द्वन्द्वाच्चुदषहान्तात् समाहारे ( ५. ४. १०६ )

चवर्गान्ताद् दषहान्ताच्च समाहारार्थद्वन्द्वात् समासान्तष्टच् स्यात् । वाक्त्वचम् । रोगिभिषजम् । दण्डदृषदम् । वाक्त्विषम् । छत्रोपानहम् इति ॥

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (२. ४. २)

---

१. 'वौ वा नि' क. पाठः.

एषां द्वन्द्व एकवत् स्यात् । प्राण्यङ्गे दन्तोष्ठम् । तूर्याङ्गमिति वाद्योपजीविन उक्ताः । वैणिकवांशिकम् । सेनाङ्गे- रथिकाश्वारोहम् । समाहारस्यैकत्वादेकत्वे सिद्धेऽपि प्राण्यङ्गादीनां समाहार एव द्वन्द्व इत्यनेनोच्यते । एवं दधिपयआदीनामेकत्वनिषेधादितरेतरयोग एव द्वन्द्वः । वृक्षमृगादीनामुभयं स्यादिति तात्पर्यम् ॥

अनुवादे चरणानाम् (२. ४. ३)

प्रमाणान्तरसिद्धस्यानुकथनरूपे वाक्ये चरणवाचिनां द्वन्द्व एकवत् स्यात् । स्थेणोर्लुङ्यवेति वाच्यम् । अस्थात् खलु बह्वृचच्छन्दोगम् । अगादिति वा । इणो गा लुङीति वक्ष्यते ।

अध्वर्युक्रतुरनपुंसकम् (२. ४. ४)

अध्वर्युरिति यजुर्वेदो लक्ष्यते । तद्विहितसोमयागानामक्लीबानां द्वन्द्व एकवत् स्यात् । सायाह्नातिरात्रम् । सामवेदविहितत्वादिषुवज्रौ । क्लीबत्वाद् राजसूयवाजपेये ।

अध्ययनतोऽविप्रकृष्टाख्यानाम् (२. ४. ५)

अध्ययननिमित्तकं प्रत्यासन्नार्थं नाम येषां तेषां द्वन्द्व एकवत् स्यात् । पदकक्रमकम् । पदक्रमपाठयोः प्रत्यासन्नत्वादुक्तिः । द्वयोः 'क्रमादिभ्यो वुन्' (४. २. ६१) ॥

जातिरप्राणिनाम् (२. ४. ६)

प्राणिवर्जितद्रव्यजातीनां द्वन्द्व एकवत् स्यात् । वेणुवीणम् । बदरामलकम् । प्राणिनां तु विट्छूद्राः । अद्रव्यवाचित्वाद् रूपरसौ । द्रव्येष्वपि व्यक्तिपरत्वे न । वेणुवीणाः ॥

विशिष्टलिङ्गो नदीदेशोऽग्रामाः (२. ४. ७)

ग्रामवर्जदेशानां नदीनां च भिन्नलिङ्गानां द्वन्द्व एकवत्स्यात् । देश इति जनपदनगरयोरुक्तिः । कुरवः कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । नगरे—मधुराहास्तिनपुरम् । नदीनां तु— गङ्गाशोणम् । एकलिङ्गानां न । गङ्गायमुने । ग्रामसम्बन्धेऽपि न । कुरुवृकस्थले । वृकस्थलं ग्रामः ॥

क्षुद्रजन्तवः (२. ४. ८)

नकुलान्तजन्तूनां द्वन्द्व एकवत् । यूकापिपीलिकम् । मण्डूकमूषिकम् ॥

येषां च विरोधः शाश्वतिकः (२. ४. ९)

नित्यवैरिणां द्वन्द्व एकवत् । अहिनकुलम् । अश्वमाहिषम् ॥

शूद्राणामनिरवसितानाम् (२. ४. १०)

अबहिष्कृतानामन्त्यजातीनां द्वन्द्व एकवत् स्यात् । ते च 'कारव' (स० ३-३-३७) इति भोजः । तक्षायस्कारम् । रजकतन्तुवायम् । बहिष्कृतानान्तु श्वपाकपुल्कसाः ॥

गवाश्वप्रभृतीनि च (२. ४. ११)

एषां नित्यमेकत्वं निपात्यते । 'गवाश्वगवाविकगवैडकाजाविकाजैडकानि' (स० ३. ३. ३८) । 'कुब्जवामनकुब्जकिरातपुत्रपौत्रश्वचण्डालस्त्रीकुमारदासीदासदासीमाणवकोष्ट्रखरोष्ट्रशशभागवतभागवतानि' (स० ३. ३. ३९) । 'शाटीप्रच्छदकुटीकुटमूत्रशकृन्मूत्रपुरीषयकृन्मेदोमांसशोणितदर्भशरदर्भ[1]तीकार्जुनशिरीषतृणोलपानि' (स० ३. ३. ४०) । गवाश्वेत्याद्युक्तेर्गोश्वावित्यादावेकत्वं न । इति ॥

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्वबडवपूर्वापराधरोत्तराणाम् (२. ४. १२)

एषां द्वन्द्वो वैकवत् । वृक्षादौ विशेषाणामेव ग्रहः । चूताशोकं चूताशोकाः । मृगे — रुरुपृषतम्, रुरुपृषताः । तृणे — कुशकाशम्, कुशकाशाः । धान्ये — व्रीहियवम्, व्रीहियवाः । व्यञ्जने — दधिघृतम्, दधिघृते । पशुषु— गोमाहिषम्, गोमहिषौ । शकुनिषु— शुकबकम्, शुकबकौ । परेषां स्वरूपग्रहः अश्वबडवम् ॥

---

१. 'नपुरुषतृ' इति मुद्रितपाठः,

## पूर्ववदश्ववडवौ (२. ४. २७)

अनयोर्द्वन्द्वस्यैकत्वाभावपक्षे पूर्ववल्लिङ्गं स्यान्न परवत् । अश्ववडवौ । पूर्वापरम्, पूर्वापरौ । अधरोत्तरम्, अधरोत्तरौ । सेनाफलक्षुद्रजन्तूनां वृक्षमृगतृणधान्यशकुनीनां च बहुप्रकृतिरेव द्वन्द्व एकवत् । रथिकाश्चाश्वारोहाश्च रथिकाश्वारोहम् । द्वित्वे तु न । रथिकाश्वारोहौ । बदरामलकं इत्यादि ॥

## विप्रतिषिद्धं चानधिकरणवाचि (२. ४. १३)

अद्रव्यवाचिनां विरुद्धवस्तूनां द्वन्द्वो वैकवत् स्यात् । शीतोष्णम्, शीतोष्णे । अविरुद्धे तु — कामक्रोधौ । द्रव्ये तु — शीतोष्णे तोये । सर्वोऽपि द्वन्द्वः समाहारार्थ एकवत् । अन्यत्र नेति ज्ञेयम् ॥

## न दधिपयआदीनि (२. ४. १४)

एतानि नैकवत् स्युः ।

दधिपयसी अपि सर्पिर्मधुनी मधुसर्पिषी उलूखलमुसले ।
ऋक्सामे वाङ्मनसे पुनरिध्माबर्हिषी प्रवर्ग्योपसदौ ॥

स्कन्दविशाखौ द्वौ स्तः शिववैश्रवणौ च शुक्लकृष्णौ च ।
श्रद्धादीक्षाध्ययनश्रुतैः पृथक् संयुतस्तपश्शब्दः ॥

ब्रह्मप्रजापती याज्यानुवाक्ये हरिवासवौ ।
तथैवाद्यवसाने च श्रद्धामेधे इतीदृशाः ॥

गणे निपातनादिध्मस्य दीर्घः ॥

## अधिकरणैतावत्त्वे च (२. ४. १५)

द्रव्यस्यैतावत्त्वे बोध्ये तु प्राण्यङ्गादीनामप्येकत्वं न स्यात् । राक्षसपतेर्स्त्रिंशच्छिरोबाहवः ॥

## विभाषा समीपे (२. ४. १६)

एतावत्त्वस्य समीपे बोध्ये एकत्वं वा स्यात् । दशासन्नं वैणिकवांशिकम्, दशासन्ना वैणिकवांशिकाः ॥

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् (१. २. ६३)

तिष्य एकं नक्षत्रम् । पुनर्वसू तु द्वौ । तेषां द्वन्द्वे बहुवचनस्य प्राप्तौ नित्यं द्विवचनं स्यात् । उदितौ तिष्यपुनर्वसू । तिष्यपर्यायेऽपीष्टम् । सिध्यपुनर्वसू । पुष्यपुनर्वसू । नक्षत्रयोर्द्वन्द्व इत्युक्तेरिह न । तिष्यपुनर्वसवस्तज्जातनराः । बहुवचनेत्युक्तेः द्वन्द्वैकत्वेऽपि न । तिष्यपुनर्वसु । विरूपाणामेव द्वन्द्वः । सरूपाणान्तु राम राम+औ —

सरूपाणामेकशेष एकविभक्तौ (१. २. ६४)

सरूपाणां शब्दानामेकविभक्तौ परतः एक एव शिष्यते । रामौ ॥

वृद्धो यूना तल्लक्षणश्चेदेव विशेषः (१. २. ६५)

यूना सहोक्तौ गोत्रं शिष्यते, गोत्रयुवप्रत्ययकृतमेव चेद् वैरूप्यम् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । तल्लक्षणश्चेदेव विशेष इत्युक्तेर्गार्ग्य-वात्स्यायनावित्यत्र न ॥

स्त्री पुंवच्च (१. २. ६६)

यूना सहोक्तौ गोत्रस्त्री शिष्यते , सा च पुंवत् स्यात् तत्कृतमेव चेद् वैरूप्यम् । गार्गी गार्ग्यायणश्च गार्ग्यौ ॥

पुमान् स्त्रिया (१. २. ६७)

स्त्रिया सहोक्तौ पुमान् शिष्यते स्त्रीपुंसकृत एव चेद्विशेषः । गोपो गोपी च गोपौ । तल्लक्षणोक्तेर्मृगीसिंहौ ।

इन्द्रेन्द्राण्याविवतीहापि त्विन्द्रस्येन्द्रत्वमेव हि ।
तत्सम्बन्धित्वमिन्द्राण्या इति भेदान्न शिष्यते ॥

अत एव 'रुद्रावित्येकशेषोऽन्वेष्यः' इति वामनः ॥

• भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (१. २. ६८)

आभ्यां सहोक्तौ क्रमादेतौ शिष्येते । भ्राता स्वसा च भ्रातरौ । पुत्रो दुहिता च पुत्रौ ॥

### नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् (१. २. ६९)

अक्लीबेन युतौ क्लीबं शिष्यतेऽस्यैकतापि वा ।
कृष्णो राधा च गीतं च रम्यं रम्याणि तानि वा ॥

### पिता मात्रा (१. २. ७०)

मात्रा सहोक्तौ पिता वा शिष्यते । पितरौ । मातापितरौ । आनङत्र वक्ष्यते ॥

### श्वशुरः श्वश्र्वा (१. २. ७१)

वा शिष्यते । श्वशुरौ श्वश्रूश्वशुराविति । पिता च पितामहादयश्च पितर इत्यादि बहूक्तं शृङ्गारे ॥

### त्यदादीनि सर्वैर्नित्यम् (१. २. ७२)

सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । स च कृष्णश्च तौ । 'त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यत इति वाच्यम्' । स च यश्च यौ । स चाहं चावाम् । भाष्यकृत् तु स च यश्च ताविति पूर्वस्यापि शेषमाह ॥

### ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री (१. २. ७३)

अतरुणेषु ग्राम्यपशुषु बहुषु सहोक्तेषु स्त्री शिष्यते । गाव इमाः । अजा इमाः । अग्राम्येषु तु पुंसः[1] शेषः । रुरव इमे । सङ्घोक्तेरबहुत्वे न । एतौ गावौ । तरुणेष्वपि वत्सा इमे । 'अनेकशफेष्विति वाच्यम्' । अश्वा इमे इति ॥

### आनङृतो द्वन्द्वे (६. ३. २५)

विद्यायोनिसम्बन्धार्थानामृदन्तानां द्वन्द्वे पूर्वपदस्यानङ् स्यात् । ङित्वादन्त आनङ् । होतान् पोतृ । 'न लोपः प्रातिपदिकान्तस्य'

1. 'पुंस्त्वं' क. पाठः.

(८. २. ७) इति नलोपः । आकारमात्रविधौ स्वरत्वं स्यादिति न कृतः । होतापोतारौ । पुत्र इत्यनुवृत्तेर्ऋत आनङ् । पितापुत्रौ ॥

देवताद्वन्द्वे च (६. ३. २६)

इह पूर्वपदस्यानङ् । मित्रावरुणौ । वायोः पूर्वत्व उत्तरत्वेऽपि नानङ् । वाय्वग्नी । अग्निवायू । एकहविर्भागित्वेनाप्रसिद्धेरिन्द्रप्रजापती इत्यादौ न ॥

ईदग्नेः सोमवरुणयोः (६. ३. २७)

अग्नीवरुणौ ॥

अग्नेः स्तुत्स्तोमसोमाः (८. ३. ८२)

अग्नेः परेषामेषां समासे सस्य षः स्यात् । अग्नीषोमौ । अग्नेर्दीर्घादेव सोमस्य षः । तेनाग्निसोमौ द्विजावित्यत्र न ॥

इद्वृद्धौ (६. ३. २८)

कृतवृद्धौ परपदेऽग्नेरित् स्यात् । अग्नामरुतौ देवतास्येत्याग्निमारुतं कर्म । विष्णौ परेऽग्नेरित्त्वं न । आग्नावैष्णवश्चरुरित्यानङेव ॥

दिवो द्यावा (६. ३. २९)

द्यावाभूम्यौ ॥

दिवसश्च पृथिव्याम् (६. ३. ३०)

पृथिव्यां परतो दिवो दिवसेत्यादेशो द्यावा च स्यात् । अकारः सस्य विसर्गाभावार्थः । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ॥

उषासोषसः (६. ३. ३१)

देवताद्वन्द्व उषस उषासा इति स्यात् । उषो नक्तं च उषासानक्तम् ॥

मातरपितरावुदीचाम् (६. ३. ३२)

उदङ्मत एवं स्यात् । अन्यत्र मातापितरौ ॥

॥ इति द्वन्द्वभागः ॥

अथ सामान्योक्ताः समासान्ताः ॥

ऋक्पूरब्धूःपथामानक्षे (५. ४. ७४)

एतदन्तानां समासानामप्रत्ययः स्यात् । धुरस्त्वक्षविषयत्वे न[1] । एकर्चं कर्म ॥

अनृचो माणवे वाच्ये बह्वृचश्चरणे भवेत् ।
अन्यत्र चेदनृक् साम बह्वृगध्वर इत्यपि ॥

'ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि' (वा० ६. १. ३७) । छन्दोभागे वाच्ये ऋचि परतस्त्रेः सम्प्रसारणमृच आदिलोपश्च स्यात् । पूर्वरूपम् । तृचं सूक्तम् । वेदादन्यत्र त्र्यृचं कर्म । राज्ञः पूः राजपुरम् । स्वभावाल्लिङ्गभेदः । विमलापं सरः ॥

द्व्यन्तरुपसर्गेभ्योऽप ईत् (६. ३. ९७)

एभ्यः परस्याप आदेरीत् स्यात् । द्विर्गता आपोऽस्मिन्निति द्वीपम् । अन्तर्हिता आपोऽत्रेत्यन्तरीपम् । प्रतीपम् । समीपम् ।

एतौ प्रातिमुखापश्च तीरं सन्निहिताम्बु च ।
आचक्षाणौ लक्षणया विरोध्यन्तिकवाचिनौ ॥
नावर्णादीत्वमित्येके परापं प्रापमित्यतः ।
यज्ञदेशः समापाख्यः समशब्दात्तु सिध्यति ॥

ऊदनोर्देशे (६. ३. ९८)

देशे वाच्ये अनोः परस्याप आदेरूत् स्यात् । अनूपः सजलो देशः । अदेशे तु–अन्वीपोऽनुकूलः । प्रतीपवदर्थः । राज्ञो धूः राजधुरा । अक्षे तु — अक्षस्य धूरक्षधूः । विषमधूरक्षः । महापथः । राजपथः । 'सङ्ख्याव्ययादेः पथस्य परवल्लिङ्गताप्राप्तौ क्लीबता वाच्या' । द्वयोः

1. 'ये न' क. छ. पाठः.

पन्था द्विपथम् । विपथम् । दुष्पथम् । कृतसमासान्तस्यात्र ग्रहात् 'पथः पन्थश्च मार्गः स्या'दित्युक्तस्य पथशब्दस्य विपथोऽपि ॥

अच् प्रत्यन्ववपूर्वात्सामलोम्नः (५. ४. ७५)

प्रत्यादिपूर्वाभ्यां सामलोमभ्याम् अच् स्यात् । प्रतिसामम् - अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । एतौ प्रतिमुखानुमुखलोमके संवाहने स्थितौ लक्षणया विरोध्यविरोध्यर्थौ । अवलोमम् । प्रतिसामादौ प्रादिसमासो बहुव्रीहिरव्ययीभावश्च यथासम्भवमिति हरः । 'कृष्णोदक्पाण्डुसङ्ख्यापूर्वाया भूमेरजिष्टः' । कृष्णमृत् कृष्णभूमो देशः, कृष्णीकृततलो वा । एवं पाण्डुभूमः । उदग्भागे भूविस्तारवानुदग्भूमः । द्विभूमः, त्रिभूमः प्रासादः । 'सङ्ख्याया नदीगोदावरीभ्यां च' । पञ्चनदम् । सप्तगोदावरम् । द्वयोनदीभिश्च (२-१-२०) इत्यव्ययीभावः । द्विगुर्वा । अन्यत्राप्यजिष्टः । पद्मनाभः । ऊर्णनाभः दीर्घरात्रः । वर्षरात्रः । 'सुरायुक्तः कतिपयरात्रशब्दश्चिन्त्यः' इति माधवः । सोऽप्यनेन साध्यः ॥

अक्ष्णोऽदर्शनात् (५. ४. ७६)

अचक्षुरर्थादक्ष्णः समासान्तोऽच् स्यात् । गवां नेत्राणां गमनरन्ध्रं गवाक्षम् । रन्ध्रार्थोऽक्षिशब्दः । 'इन्द्रे च नित्यम्' (६-१-१२४) इति चकाराद् गवाक्षे च नित्यमवङिति कौमुदी । चक्षुषि तु—विप्रस्याक्षि विप्राक्षि ।

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः (५. ४. ७७)

एतेऽजन्ताः पञ्चविंशतिर्निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि विशिष्टानि शोभनानि चत्वारि[1] यस्य अचतुरः, विचतुरः,

1. 'वि च चत्वा' इति केरलवर्मदेवाः.

सुचतुरः। अनुपाभ्यां चतुरोऽजिष्टः। त्रिचतुराः। उपचतुराः। 'सङ्ख्य-याव्यय' (२-२-२५) इति बहुव्रीहिः। तत एकादश द्वन्द्वाः। स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिभ्रुवम्। दारगवम्। ऊर्वष्ठीवम्। निपातनाट्टिलोपः। पदष्ठीवम्। अत्र पद्भावोऽपि। नक्तन्दिवम्। रात्रिन्दिवम्। अहर्दिवम्। अहन्यहनीत्यर्थः। रात्रिपर्यायो वाहश्शब्द इति नाथः। तत्र रात्रिन्दिवमित्येवार्थ इत्यन्ये' रजसा सकलमात्ति सरजसम्। साकल्येऽव्ययीभावः। निश्चितं श्रेयो निःश्रेयसमिति कर्मधारयः। पुरुषस्यायुः पुरुषायुषमिति षष्ठीसमासः। ततो द्विगू। द्व्यायुषं, त्र्यायुषम्। ततो द्वन्द्वः।। ऋग्यजुषम्, ततस्त्रयः कर्मधारयाः। जातोक्षः, महोक्षः, वृद्धोक्षः। शुनः समीपमुपशुनम्। गोष्ठे श्वा गोष्ठश्वः। तद्वत् परोपद्रवकर्ता पुरुषो गोष्ठश्व इति स्वामी॥

## ब्रह्महस्तिभ्यां वर्चसः (५. ४. ७८)

अच् स्यात्। ब्रह्मवर्चसम्। हस्तिवर्चसं मद्योत्थं तेजः। पल्यराजभ्यां च। करिणां भोजनं पल्यं, तत्कृतं तेजः पल्यवर्चसम्। राजवर्चसम्।

## अवसमन्धेभ्यस्तमसः (५. ४. ७९)

एभ्यस्तमसोऽच्। अवक्षीणं तमोऽवतमसम्। संव्याप्तं सन्तमसम्। अन्धतमसम्। अन्धयतीत्यन्धम्। सन्तमसो देश इति शाङ्करोक्तेरेषु बहुव्रीहिरपि॥

## श्वसो वसीयःश्रेयसः (५. ४. ८०)

भाविकाले श्रेयः श्वःश्रेयसं, श्वोवसीयसं च। प्रशस्यार्थाद्[1] वसुशब्दादीयसुनि वसीयः श्रेयस एवेति हरः॥

## अन्ववतप्ताद्रहसः (५. ४. ८१)

अनुरहसम्। सप्तम्यर्थे वीप्सायां वाव्ययीभावः। प्रादिसमासेऽपि। रहोऽनुप्राप्तोऽनुरहसो नरः। अनुगतं रहोऽस्मिन्निति देशोऽपि।

१. प्रशंसार्था इति केरलवर्मदेवाः.

अवरहसमीषद्रहः । अवहीनं रहोऽस्मिन्निति वा । अत्यन्तं रहस्तम-
रहसमिति हरः ॥

द्विस्तावा त्रिस्तावा वेदिः (५. ४. ८४)

यावती प्रकृतौ वेदिः ततो द्विगुणा त्रिगुणा वा कस्यांचिद्वि-
कृतौ । तत्र द्विस्तावा त्रिस्तावा च वेदिः । वेदिगतेऽग्निचयेऽपि द्विगुणे
सति द्विस्तावोऽग्निरित्याह हरः । वेदेरन्यत्र द्विस्तावती रज्जुः ॥

उपसर्गादध्वनः (५. ४. ८५)

अच् स्यात् । प्रगतोऽध्वानं प्राध्वो रथः । दुष्टोऽध्वा दु-
रध्वः ॥

न पूजनात् (५. ४. ६९)

पूजनार्थात् परेभ्यः समासान्ता न स्युः । स्वती पूजायामिति
सुराजा, अतिराजा । स्वतिभ्यामेव निषेधः । तेन परमराज इत्यादिः
स्यात् । बहुव्रीहौ सक्थ्यक्ष्णोरित्यारभ्यानिषेधः । सुसक्थः,
स्वक्षः ॥

किमः क्षेपे (५. ४. ७०)

क्षेपार्थात् किमः परस्य समासान्तो न । किंराजा । प्रश्ने तु
कस्य राजा किंराजोऽयम् ॥

नञस्तत्पुरुषात् (५. ४. ७१)

नञ्पूर्वात् तत्पुरुषात् समासान्तो न । अराजा, असखा ।
अतत्पुरुषे स्यात् । अधुरः पुरुषः ॥

पथो विभाषा (५. ४. ७२)

नञ्पूर्वात् पथः तत्पुरुषात् समासान्तो वा स्यात् । अपन्थाः,
अपथम् । अस्य परवल्लिङ्गे प्राप्ते —

अपथं नपुंसकम् (२. ४. ३०)

तत्पुरुषोऽपथशब्दः क्लीबं स्यात्। बहुव्रीहौ तु अपथो देशः ॥

अर्धर्चाः पुंसि च (२. ४. ३१)

अर्धर्चादयः पुंसि क्लीबे च स्युः। अर्धर्चाष्टापदसुवर्णशतमानकार्षापणवारवाणगन्धमादनान्धकारापराह्णापूर्वोपवासनिर्यासविमानप्रग्रीवप्रवालवाजपेयराजसूयप्रतिसरादयः। एते सप्तदश। ऋचोऽर्धमर्धर्चः, अर्धर्चम्। बाणं वारयतीति अणि राजदन्तादिना वारवाणः कञ्चुकः। अपूर्वो यज्ञाद्यदृष्टम्[1]। प्रग्रीवो मत्तवारणाख्यः। आद्युक्तेरुद्यानः, उद्यानम्। द्वीपः, द्वीपमित्यादि। वृत्तौ तु धर्मं धर्म इत्याद्यसमासा अपि बहव उक्ताः तेषामनन्तत्वादनुक्तिः ॥

अथोत्तरपदाधिकारः।

अलुगुत्तरपदे (६. ३. १)

अधिकारोऽयम् ॥

ओजःसहोऽम्भस्तमसस्तृतीयायाः (६. ३. ३)

एभ्य उत्तरपदे परे तृतीयाया अलुक् स्यात्। ओजसाजितम्। सहसाकृतम्। अम्भसासिक्तम्। तमसाच्छन्नम्। विशेषानुक्तावलुक्येकवद्भावो वाच्यः। तेन तमोभिः छन्नमित्यादावपि तमसाच्छन्नमेव। अञ्जसश्च वाच्यम्। अञ्जसाकथितम्। पुंसानुजो जनुषान्धश्चेष्टः। पुंसा हेतुनानुजः। पुंसोऽनुज इत्यर्थः। हेत्वन्तरं विना जन्मनैवान्धो जनुषान्धः ॥

---

१. 'ष्टः' च. छ. पाठः.

मनसः संज्ञायाम् (६. ३. ४)

मनसादत्ता नाम काचित्। अनाम्नि मनोदत्ता कन्या॥

आज्ञायिनि च (६. ३. ५)

अस्मिन् परपदे मनसस्तृतीयाया अलुक् स्यात्। मनसा समन्ताज्ज्ञानशीलो मनसाज्ञायी॥

आत्मनश्च पूरणे (६. ३. ६)

पूरणार्थे परे आत्मनस्तृतीयाया अलुक् स्यात्। आत्मनापञ्चमः। आत्मनाशततमः॥

प्रकृत्यादिभ्यश्च। प्रकृत्याभिरूपः॥

वैयाकरणाख्यायां चतुर्थ्याः (६. ३. ७)

शाब्दिककृताख्यायामात्मनश्चतुर्थ्या अलुक् स्यात्। आत्मनेपदम्। आत्मनेभाषो धातुः। अलुग्विधिसामर्थ्याच्चतुर्थीसमासः॥

परस्य च (६. ३. ८)

परस्मैपदम्। परस्मैभाषः। ब्रह्मणाच्छंसीत्यत्र पञ्चम्या अलुग्वाच्यः। ब्राह्मणादाहृत्य सूक्तानि शंसतीति ब्राह्मणाच्छंस्यृत्विग्भेदः। 'हलदन्तात्सप्तम्या०' इत्यत्र हृद्द्युभ्यां ङेरलुग्वाच्यः। हृदिस्पृक्। दिविस्पृक्॥

कारनाम्नि च प्राचां हलादौ (६. ३. १०)

हलादौ प्राग्देशभवे कारनाम्नि परे हलदन्तात् सप्तम्या अलुक् स्यात्। कारो राजभागः। हलेद्विपदिका। दृपदिमाषकाः॥

मध्याद् गुरौ (६. ३. ११)

सप्तम्या गुरावलुक् स्यात्। मध्येगुरुः। अन्ताच्च वाच्यम्। अन्तेगुरुः॥

## अमूर्धमस्तकात् स्वाङ्गादकामे (६. ३ १२)

मूर्धमस्तकवर्जिताद्धलदन्तात् स्वाङ्गात् परायाः सप्तम्याः कामवर्जिते परपदेऽलुक् स्यात् । सप्तम्युपमानेति समासः । कण्ठे स्थितः कालवर्णोऽस्येति कण्ठेकालः । वहेगडुः । उरसिलोमा । उदरेमणिः । मूर्द्धमकुटो मस्तकशिख इत्यत्र न । मुखे कामेऽस्येति मुखकाम इत्यत्रापि न ।

## बन्धे च विभाषा (६. ३. १३)

घञन्ते बन्धे परे हलदन्तात् सप्तम्या अलुग्वा स्यात् । हस्तेबन्धः, हस्तबन्धः । बहुव्रीहिस्तत्पुरुषो वायम् । तत्पुरुषे कृतीति बहुलोक्तेः वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्विति वाचस्पतिदिवस्पत्यादि । अन्त्ययोः सुडुक्तः । वास्तोष्पतिस्तु वास्तोष्पतिगृहमेधादित्युक्त्यैव सिद्धः । गोपुचरो वर्षासुचर इति च हरोक्तौ ॥

## प्रावृट्छरत्कालदिवां जे (६. ३. १५)

एभ्यः सप्तम्या जे परेऽलुक् स्यात् । प्रावृषिजः । शरदिजः । कालेजः । दिविजः ॥

## विभाषावर्षक्षरशरवरात् (६. ३. १६)

वर्षेजः, वर्षजः । क्षरेजः, क्षरजः । शरेजः, शरजः । वरेजः, वरजः । घकाल ० (६- ३- १७) इति कालशब्दे वालुक् । प्राह्णेकाले, प्राह्णकाले ॥

## शयवासवासिष्वकालात् (६. ३. १८)

एषु परेषु सप्तम्या अलुग्वा स्यात् । कालात् तु न । तल्पेशयः । तल्पशयः । वनेवासः । वनवासः । घञ् । वने वासी, वनवासी । कालात् तु निशीथशयः । 'अपो योनियन्मतिषु'[1] । अप्सुयोनिरग्निः । अप्सव्यः । दिगादियत् । अप्सुमतिः पान्थः ॥

---

1. 'निधिषु' छ. पाठः.

## नेन्सिद्धबध्नातिषु च (६. ३. १९)

इन्नन्ते सिद्धशब्दे बध्नातौ च परे तत्पुरुषे कृति० (६. ३ १४) इत्यलुङ् न स्यात् । वनवर्ती । शास्त्रसिद्धः । यूपबन्धः ॥

## स्थे च भाषायां (६. ३. २०)

स्थे परे भाषायामलुङ् न । शैलस्थः । च्छन्दसि तु आखरेष्ठ इत्याद्यलुगस्त्येव ॥

## षष्ठ्या आक्रोशे (६. ३. २१)

क्षेपे द्योत्ये षष्ठ्या अलुक् । चोरस्यकुलम् । देवानांप्रियोऽसमर्थः । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु', वाग्योजनं वाचोयुक्तिः । तद्वानित्यन्ये । दिशोदण्डः । पश्यतोहरः । शुनः शेपपुच्छलाङ्गूलेषु संज्ञायाम् । शुनःशेपः शुनःपुच्छः शुनो लाङ्गूल इत्यृषयः । 'दिवश्च दासे' । दिवोदासः ॥

## पुत्रेऽन्यतरस्याम् (६. ३. २२)

क्षेपे द्योत्ये पुत्रे परे षष्ठ्या अलुग्वा स्यात् । दास्याःपुत्रः, दासीपुत्रः ॥

## ऋतो विद्यायोनिसम्बन्धेभ्यः (६. ३. २३)

ऋदन्तात् विद्यायोनिसम्बन्धवाचिनस्तद्वाचिन्येव परे षष्ठ्या अलुक् स्यात् । होतुःशिष्यः । होतुःपुत्रः । पितुःशिष्यः । पितुःपुत्रः । अन्यस्मिन् परे न । होतृधनम् ॥

## विभाषा स्वसृपत्योः (६. ३. २४)

अनयोः परयोः ऋदन्तादुक्तालुग्वा स्यात् । होतुःस्वसा,

---

१. 'मू अछ' क. पाठः.

होतृस्वसा । दुहितुःपतिः । दुहितृपतिः ॥

अलुग् गतः । उत्तरपद इति पादान्तं स्थास्यति ॥

हृदयस्य हृल्लेखयदण्लासेषु (६. ३. ५०)

यदणोरुक्तम् । हृदयं लिखतीति हृल्लेखः उत्कण्ठा । कर्मण्यण्येवेष्टम् । तेन घञि हृदयलेखः । हृदयस्योल्लासो हृल्लासः ॥

वा शोकष्यञ्रोगेषु (६. ३. ५१)

एषु परेषु हृदयस्य हृद् वा । हृच्छोकः । हृदयशोकः । ब्राह्मणादिष्यञि सौहार्द्यं सौहृदय्यम् । हृद्रोगः हृदयरोगः ॥

पादस्य पदाज्यातिगोपहतेषु (६. ३. ५२)

एषु परेषु पादस्य पदेत्यादेशः स्यात् । अज्यतिभ्यामौणादिक इञि आज्यातिसिद्धिः । पदाजिः । पदातिः । पदगः । त्रयस्तुल्यार्थाः पदोपहतः ॥

हिमकाषिहतिषु च (६. ३. ५४)

एषु पादस्य पद्भावः स्यात् । पादे हिमं पद्धिमम् । पत्काषी । पादचारी । पादेन हन्यमाना पद्धतिः । चकारात् पद्घोऽपि ॥

वा घोषमिश्रशब्देषु (६. ३. ५६)

पद्घोषः पादघोषः इत्यादि । निष्के च वाच्यम् । चतुरंशितो निष्कः पन्निष्कः । पादनिष्कः ॥

उदकस्योदः संज्ञायाम् (६. ३. ५७)

उदकस्योत्तरपदे परे नाम्नि उदः स्यात् । उदपानः कूपाख्या । उत्तरपदस्यापि वाच्यः[1] । क्षीरोदः ॥

पेषंवासवाहनधिषु च (६. ३. ५८)

उदपेषं पिनष्टि । 'स्नेहने पिषः' इति णमुल् । उदवासः । उदवाहनम् । संज्ञात्वेनोदधिसिद्धावपि धिग्रहणाद् उदधिरयं कुम्भ इत्यनाम्न्यपि ॥

---

१. 'च्यम्' क. पाठः.

एकहलादौ पूरयितव्येऽन्यतरस्याम् (६. ३. ५९)

असंयुक्तहलादौ पूरयितव्ये परे उदो वा स्यात् । उदकुम्भः । उदककुम्भः । एकहलादित्वाभावादुदकस्थाली ॥

मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च । (६. ३. ६०)

एषूदो वा। उदकार्द्रो मन्थः उदमन्थः। उदकासिक्तः (औदनः) उदौदनः। उदसक्तुः। उदबिन्दुः। अपां क्रूरोऽशः उदवज्रम्। वज्रतुल्यं शापाद्युदकं वा। उदभारः। उदहारः। उदवीवधः, उदगाहः। भारादौ कर्मण्यण्, घञ् वा। सर्वं यथासम्भवमिति हरः। विकल्पादुदकमन्थ इत्यादि ॥

इको ह्रस्वोऽङ्यो गालवस्य (६. ३. ६१)

अङ्यन्तस्येक उत्तरपदे परे ह्रस्वो वा स्यात् । ग्रामणिपुत्रः। ग्रामणीपुत्रः। वधुजनः। वधूजनः। ङ्यन्तस्य तु गोपीपुत्रः। इयङुवङ्भाविनामव्ययानां च न। श्रीपुत्रः। भ्रूभङ्गः। शुक्लीभावः। च्व्यन्तत्वादव्ययत्वम्। भ्रूकुंसादेस्तु वा ह्रस्वः। भ्रुकुंसः भ्रूकुंसः। भ्रुकुटिः भ्रूकुटिः। एषामत्वं वाच्यमिति केचित्। भ्रकुंसः भ्रकुटिः ॥

एकतद्धिते च (६. ३. ६२)

तद्धित उत्तरपदे च परे एकस्यान्तह्रस्वः स्यात् । एकस्या भाव एकत्वम्। एकक्षीरम् ॥

ङ्यापोः संज्ञाछन्दसोर्बहुलम् (६. ३. ६३)

नाम्नि वेदे च ङ्यापोर्बहुलं ह्रस्वः स्यात् । कालिदासः। स्त्रीणां वनं प्रमदवनम्। मन्दुराजातो मन्दुरजः। बहुलोक्तेः क्वचिन्न। तेन 'अहाहि प्रमदावनमि'ति भट्टिः ॥

---

१. 'च्यमू भ' ग. पाठः.

इष्टकेषीकामालानां चिततूलभारिषु (६. ३. ६५)

क्रमाद्ध्रस्वः स्यात् । इष्टकचितम् । इषीकतूलम् । तूलमग्रम् । मालभारी । 'हारिष्वि'ति पाठमाह माधवः । मालहारी । तदन्तस्यापीष्टम् । पक्वेष्टकचितम् । वनमालभारी ॥

कारे सत्यागदस्य (६. ३. ७०)

अनयोः कारे परे मुं स्यात् । घञ्यणि वा । सत्यङ्कारः । अगदङ्कारः । अस्तुङ्कार इति चेष्टम् । अस्त्विवत्यस्तुयाप्रतिवचनेऽव्ययम् । इत्येऽनभ्याशस्य मुं वाच्यः । अनभ्याशमित्यः खलः । अगिलस्य गिले मुं वाच्यः । तिमिङ्गिलः । गिलस्य तु न । गिलगिलः । गिलगिले परे मुं वाच्यः । तिमिङ्गिलगिलः । 'उष्णभद्रयोः करणे' । उष्णङ्करणम् । भद्रङ्करणम् ॥

रात्रेः कृति विभाषा (६. ३. ७२)

कृदन्ते परे रात्रेर्वा मुम् । रात्रिञ्चरः । रात्रिचरः । चरेष्टः (३. २-१६) रात्रिमटः । रात्र्यटः । पचाद्यच् ॥

सहस्य सः संज्ञायाम् (६. ३. ७८)

साश्वत्थं सपलाशमित्याख्या ॥

ग्रन्थान्ताधिके च (६. ३. ७९)

ग्रन्थान्तवचनेऽधिकार्थे च सहस्य सः स्यात् । समुहूर्तं ज्योतिषमधीते । अन्तवचनेऽव्ययीभावः । 'अव्ययीभावे चाकाले' (६-३-८१) इति सभावो मुहूर्तादिकाले ग्रन्थपरे न प्राप्नोतीत्ययं विधिः । अधिके— सद्रोणा खारी ॥

द्वितीये चानुपाख्ये (६. ३. ८०)

सहितवस्तु द्वितीयम् । तस्मिन्नदृश्ये सति सहस्य सः स्यात् । सपिशाचा वात्या । अत्र पिशाचस्यादृश्यत्वम् ॥

प्रकृत्याशिष्यगोवत्सहलेषु (६. ३. ८३)

आशिषि द्योत्यायां सहशब्दः प्रकृत्या स्यात् । स्वस्ति ते सहपुत्राय सहामात्याय । गवादौ परे तु 'वोपसर्जनस्य' (६-३-८२) इति विकल्प एव । सगवे सहगवे[1], इत्यादि । 'समानस्य च्छन्दसि' (६-३-८४) इत्यत्र समानस्येति च्छेदाल्लोकेऽपि क्वचित् सभावः । समानपक्षः सपक्षः । समानधर्मा सधर्मा । एवं सपिण्डसजातिसगन्ध-सपत्न्यादि[2] यथादृष्टमेव ॥

ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्ण-वयोवचनबन्धुषु (६. ३. ८५)

एषु समानस्य सः । सज्योतिः । सजनपदः । सरात्रिः । सवयाः । सवचन इत्यादि । सर्वत्र बहुव्रीहिः कर्मधारयो वेति हरः ॥

चरणे ब्रह्मचारिणि (६. ३. ८६)

चरणः शाखा । तत्समानत्वे द्योत्ये ब्रह्मचारिणि परे समानस्य सः स्यात् । ऐक्येन वेदव्रतचारिणः सब्रह्मचारिणः ॥

विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये (६. ३. ९२)

अभावरूपप्रत्ययान्ते[3] क्विबन्तेऽञ्चतौ परे विष्वग्देवयोः सर्व-नाम्नश्च टेरद्रि इत्यादेशः स्यात् । वप्रत्यय इति पाठे वकाररूपप्रत्ययान्त इत्यर्थः । विष्वगिति सर्वतोऽर्थेऽव्ययम् । विष्वगञ्चतीति विष्वद्र्यच् । पदकार्ये विष्वद्र्यङ् । देवद्र्यङ् । सर्वद्र्यङ् । विश्वद्र्यङ् । तद्र्यङ् । यद्र्यङ् । अदसष्टेरद्र्यादेशे अदद्र्यच् । अत्र 'अदसोऽसेः...' (८-२-८०) इत्युत्वमत्वप्राप्तावाह कौमुदी—

---

१. 'वे समा' ग. पाठः. २. 'दिषु य' ग. पाठः. ३. 'न्तेऽञ्च' ग. पाठः.

"परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः ।
उभयोः केचिदिच्छन्ति केचिदिच्छन्ति नोभयोः ॥"

अत्र परदकारस्य मत्वे तदुपरि रेफस्योत्वे च कृते यकारशेषात् अदमुयङ् । पूर्वदकारस्येति मते अमुद्र्यङ् । उभयोश्चेद् अमुमुयङ् । नोभयोश्चेद् अदद्र्यङ् ॥

समः समि (६. ३. ९३)

अप्रत्ययान्तेऽञ्चतौ परे समः समिः स्यात् । सम्यङ् ॥

सहस्य सध्रिः (६. ३. ९५)

सहाञ्चन् सध्र्यङ् ॥

अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु (६. ३. ९९)

अषष्ठीतृतीयार्थवृत्तेरन्यशब्दस्याशीरादिषु परेषु दुक् स्यात् । प्रथमया सप्तम्या वा समासः । अन्या आशीः अन्यदाशीः । अन्यदाशा । अन्यदास्था[1] । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यत्कारकः । अन्यद्रागः । अन्यत्र भवोऽन्यदीयः । गहादित्वाच्छः । षष्ठीतृतीययोस्तु– अन्यस्याशीरन्याशीः । अन्येनास्थितोऽन्यास्थितः । कारकच्छयोस्तु सर्वत्रेष्टम् । अन्यस्य कारकः अन्यत्कारकः । अन्यस्येदमन्यदीयम् ॥

अर्थे विभाषा (६. ३. १००)

अन्यदर्थम् । अन्यार्थम् ॥

कोः कत् तत्पुरुषेऽचि (६. ३. १०१)

अजादौ परपदे तत्पुरुषे कोः कदादेशः स्यात् । कदन्नम् । अतत्पुरुषे तु– कन्नो देशः । त्रौ च वाच्यम् । कुत्सितास्त्रयः कत्त्रयः ।

---

१. 'स्थ' क. ग. पाठः.

रथवदयोश्च (६ ३. १०२)

कद्रथः । बहुव्रीहिस्तत्पुरुषो वा । कद्वदः । पचाद्यच् । चकारात् कुत्सितश्चरतीति कच्चरो मलिनः ॥

तृणे च जातौ (६. ३. १०३)

कत्तृणम् ॥

का पथ्यक्षयोः (६. ३. १०४)

सङ्ख्याव्ययादेः पथः क्लीबत्वात् कापथम् । पथशब्दस्य कुपथोऽपि । कापथः पुंस्यस्ति चेत् पथशब्दस्येषदर्थे काभावेन साध्यः । कुत्सितमक्ष्यस्येति काक्षः । कुत्सितमक्षं वा काक्षम् ॥

विभाषा पुरुषे (६. ३. १०६)

कुत्सितः पुरुषः कापुरुषः, कुपुरुषः ।

कवं चोष्णे (६. ३. १०७)

कवमिति क्लीबैकवचनेनोक्तिः । उष्णे परे कोः कवादेशः का च वा स्यात् । कवोष्णम्, कोष्णम्, कदुष्णम् । अग्नावपीति कौमुदी । कवाग्निः, काग्निः, कदग्निः ॥

पृषोदरादीनि यथोपदिष्टम् (६. ३. १०९)

एतानि यथाप्रयोगमेव साधूनि । पृषद् बिन्दुः, तद्युक्तोदरः पृषोदरः । पृषतो मृगस्योदरं वा पृषोदरम् । अज्ञातसिद्धीनां निरुक्तप्रकारोऽत्र द्रष्टव्यः ।

'वर्णागमो वर्णविपर्ययश्च
द्वौ चापरौ वर्णविकारनाशौ
धातोस्तदर्थातिशयेन योग-
स्तदुच्यते पञ्चविधं निरुक्तम् ॥'

वर्णागमात् कुञ्जलं स्यात् सिंहो हिंसाविपर्ययात् ।
दीर्घे ह्रस्वविकारेण पृथिवी पृथिविः किल ॥

अश्ववत् स्थाम बलमस्याश्वत्थामेति सस्य तः ।
वर्णलोपाद् वार्धुषिको भवेद् वार्धुषिरित्यपि ॥

ईषतेर्गमनार्थत्वान्मनीषा मनसो गतिः ।
परश्वधः पर्श्वधोऽपि परशुः पर्शुरित्यपि ॥

मारिषः किल मार्षोऽपि परिषत् पर्षदप्यतः ।
मह्यां सातिशयं रौति मयूरोऽतिशये त्विदम् ॥

तथैव मह्यामत्यन्तं शेते महिष इत्यपि ।
महिषादिरुणादौ स्याद[1]र्थोऽस्यादिहोच्यते ॥

षष उत्वं दातृदशनोरुत्तरपदादेः ष्टुत्वं च । 'वयसि दन्तस्य दतृ' (५. ४. १४१) ष उ दत् । आद्गुणः । दस्य डः षोडन् । षडधिका दश षोडश । धाप्रत्यये वेति वाच्यम् । षोढा, षड्धा ।

दाशनाशदभध्येषु दुर उत्वं परस्य दुः ।
दुःखेन देयो दूडाशो दूणाशो दूडभश्च खलु ॥

ध्याजहिंसार्थकाद् दन्भेर्नलोपोऽत्र निपातनात् ।
दुष्टं ध्यायति दूढ्योऽसौ नैते च्छन्दोऽधिकारगाः ॥

समा[2]से वा वर्णशब्दस्यादिलोप इति स्वाम्यादयः । सुवर्णमेव स्वर्णम् । पञ्चार्णो मन्त्रः । 'जपादीनां पो वः' (स० ७. ३. ६१) इति भोजः । कपाटमेव कवाटम् । प्रविशतां कं शिरः पाटयतीति व्युत्पत्तिः । 'आश्वतती'त्यौणादिक इनि पृषोदरादित्वादादेर्ह्रस्वे सत्यश्वति[3]र्नक्षत्रमिति हरः ॥

---

१. 'य' क. पाठः. २. 'से वर्णे' ग. च. पाठः ३. 'तिर्नाम नक्ष' क ग. पाठः.

दिग्भ्यः परस्य तीरस्य तारभावोऽत्र वेष्यते ।
कालिन्द्याः पूर्वतारे वा पूर्वतीरेऽथवा हरिः ॥

वाचो वादे परे डः स्याद्वाड्वादो वदतेरणि ।
वाड्वादादिञि वादस्य वलः स्याद्वाड्वलिः सुतः ॥

अन्येऽप्येवं श्मशानं हि शवानां शयनस्थलम् ।
समानं धारणं यस्य स हि साधारणो मतः ॥

वारिवाहो वलाहः स्यात् पिशिताशः पिशाचकः ।
ऊर्ध्वं खं बिलमस्येति ह्युलूखलमुदूखलम् ॥

क्षुद्रग्रामो ग्रामटिका दग्धा भिस्सैव भिस्सटा ।
वधूरेव वधूटीति टकारो लक्ष्यमात्रतः ॥

परत्वं राजदन्तादेः सुट् च पारस्करादिना ।
इह पाठात् सस्य रुत्वं परोक्षोऽक्षात् परो भवेत् ॥

एवं परोरजा विद्वान् परोक्षस्त्वक्षितो यदि ।
शरदादिटचा सिद्धिः परोक्षीति स्त्रियां भिदा ॥

परःशब्दः सकारान्तो निपात इति भोजराट् ।
लोपोऽस्त्यवश्यमः कृत्ये तुमः कामे मनस्यपि ॥

समो हिते तते वा स्यान्मांसस्य ल्युड्घञोः पचेः ।
अवश्यकार्यमागन्तुकामो द्रष्टुमना अपि ॥

संहितं सहितं तद्वत् सन्ततं सततं तथा ।
साहित्यमपि सातत्यमिति नित्यं मतं ष्यञि ॥

मांसस्याप्यन्त्यलोपो वा मांस्पाको मांस्पचन्युखा ।
मांसपाकस्तथा मांसपचनं च विकल्पतः ॥

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

इजादेः सनुमः (८- ४- ३२)

उक्तणत्वं सानुस्वारस्य धातोश्चेदिजादेरेव । प्रेङ्खणम् । अन्यत्र न । प्रकम्पनम् । इन्वतेर्नुमि सत्यप्यनुस्वाराभावात् प्रेन्वनमित्यत्र णत्वं न । इविन्व्योरित्यर्थः ॥

न भाभूपूकमिगमिप्यायिवेपाम् (८- ४- ३४)

एषामुपसर्गात् कृन्नस्य णत्वं न स्यात् । प्रभानम् । प्रभवनम् । प्रपवनम् । पूञ एव निषेधः । पूङस्तु प्रपवणीयः सोमः । प्रकमनम् । प्रगमनम् । प्रप्यायनम् । प्रवेपनम् । भादीनां ण्यन्तत्वेऽपि णत्वं न । प्रभापनम् । प्रभावनम् । प्रपावनमित्यादि ॥

षात् पदान्तात् (८-४-३५)

पदान्तात् षात् परस्य णत्वं न । सर्पिष्पानम् । दुष्पानः कषायः । 'वा भावकरणयोः' (८- ४- १०) इति 'कृत्यच' (८- ४- २९) इति च प्राप्तिः । षकारस्य पदात् पूर्वत्व एव निषेधः । तेन सर्पिष्केणेत्यत्र प्रत्ययात् पूर्वत्वान्न ।

इत्थं समासखण्डोऽयं भिन्नपरिकरो गतः ।
सिद्धं च प्रातिपदिकं कृत्तद्धितसमासजम् ॥

राज्ञो भार्या राजभार्येत्यर्थभेदोऽस्ति किञ्चन ।
वाक्ये व्यपेक्षा सामर्थ्यं वृत्तौ त्वैकार्थ्यमेव तत् ॥

ऋद्धस्य राजपुरुषोऽपि च राजपुत्रो
भार्या च राजतनयः सचिवस्य चेति ।
नास्त्येव वृत्तिषु मिथोऽपि हि लक्षकत्वा-
दैकार्थ्यमेव पदयोर्जलपांसुरीत्या ॥

नन्दस्य पुत्रप्रणयी जनोऽयमित्यादिसंबन्धिपदे सुतादौ ।
स्वार्थाभिपूर्त्तिः प्रतियोगिनेत्यसमार्थवद् तद्युततापि दोषः ॥

स्यात् सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्य खल्वपि ।
आदिराजयशो नैव तेषां नाशे विनश्यति ॥

---

१. 'यः । भाव' क. ग. पाठः.

पूर्णश्चन्द्र इवेति तु विशेषणासक्तिरिवसमासे या ।
सा खलु सुबलोपाद्यैस्तद्वृत्तेर्वाक्यतुल्यतावगमात्[1] ॥

सामर्थ्यादुपमानेनैवास्य नित्यसमासगीः ।
न तद्विशेषणैः शब्दैर्नवीनमिव पङ्कजम् ॥

नवीनं पङ्कजमिवेत्यर्थो वाच्यो हि सर्वथा ।
पूर्वैकपद्ये तन्न स्यात् पृथगेव पदं ततः ॥

महिम्ना त्वीदृशस्थानेष्विवशब्दं निनिन्द, तत् ।
युक्तं नित्यसमासत्वात् प्रयोगाः किन्तु दुस्त्यजाः ॥

इवशब्दो लोक एवं यजुषि व्यस्त एव सः ।
समस्त एवर्क्षु चेति प्रातिशाख्यैर्विविच्यताम्[2] ॥

कृत्सूपपदगत्योस्तु समासक्रम उच्यते ।
विग्रहे[3] चात्रोपपदं धातौ स्वस्वसुपा वदेत् ॥

प्रादियोगे स च स्वन्तो मध्ये वाच्योऽथ कृद्विधिः ।
ततो गतेः समासः स्यात् पश्चादुपपदस्य च ॥

तयोः सुपेत्यसम्बन्धात् समासौ प्राक् तु कृत्सुपः ।
सप्तम्योपपदे प्रादौ समासो द्विः स एव तु ॥

अथान्नाभ्यवहार्यादौ गत्योः सह समर्थयोः ।
स्वन्तयोः सकृदेवार्थात् समासः स्याद् द्विरन्यथा ॥

इति ।

महासंज्ञा इहान्वर्थाः सर्वनामपदं यथा ।
सर्वान्वयत्तदाद्या हि सत्रार्थस्यापि वाचकाः ॥

सर्वनामस्थानसंज्ञा कृत्स्नशब्दस्थितेरिह ।
शिसुटोः खल्वलोपाद्भिर्न दाम्ना पपुषेतिवत् ॥

पूर्वाचार्योपहासार्थो तां वैफल्याद्गुरोऽब्रवीत् ।
कर्तरि क्विपि कृच्छब्दो येषां मध्ये हि दृश्यते ॥

---

१. 'थैरिव वृ' २. 'ताम् इति कृ' ३. 'हे तत्रो' ङ, केरलवर्मदेवाः.

ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे (६. १. १३)

तत्पुरुषे पुत्रपत्योः परयोः ष्यङन्तस्य सम्प्रसारणं स्यात् । पूर्वरूपम् ।

सम्प्रसारणस्य (६. ३. १३९)

सम्प्रसारणान्तस्योत्तरपदे[1] परे दीर्घः स्यात् । वाराह्यायाः पुत्रो वाराहीपुत्रः । वाराहीपतिः । ष्यङन्तस्य प्रधानत्वे समासेऽपि सम्प्रसारणमिष्टम् । परमवाराहीपुत्रः ।

बन्धुनि बहुव्रीहौ (६. १. १४)

ष्यङो बन्धुशब्दे परे बहुव्रीहौ सम्प्रसारणं स्यात् । वाराहीबन्धुः । तत्पुरुषे तु वाराह्या बन्धुः ।

ष्यङः प्रसारणं वा स्यान्मातञ्मातृकमातृषु ।
बहुव्रीहौ ष्यङन्तेभ्यो मातुर्वा मातजिष्यते ॥
कप् च वा स्यादतः सिद्धा मातञ्मातृकमातरः ।
वाराहीमात एषः स्याद्वाराह्यामात इत्यपि ॥

एवं वाराहीमातृकः । वाराह्यामातृकः । वाराहीमाता । वाराह्यामाता ।

"ष्यङोऽन्यत्र तु सम्बुद्धौ मातुर्मातञ्व्यवस्थितः ।
प्रशस्ततनये वाच्ये देवकीमात हे हरे!" ॥

दिव्+नाथ इत्यत्र लुप्तषष्ठीविभक्त्याश्रयेण[2] दिवः पदत्वे—

दिव उत् (६. १. १३१)

पदस्य दिव उत् स्यात् । वस्योत्त्वम्, यण् । द्युनाथः । द्युवासी ।

असवर्णेऽचि परतो दिव उत्त्वं निषिध्यते ।

---

१. 'दे दी' क. पाठः.　　२. 'यणे दि' ग. पाठः.

> मुग्धबोधाभिधे सूत्रे दिवीशो द्यूपरिस्थितः ।
> वृष्णो वसौ परे भत्वं छान्दसं लोक इष्यते ॥
> अपदत्वान्नलोपो न वस्विन्द्रस्य वृषण्वसु ।

तत्तुल्यवसुमानपि वृषण्वसुः इति ॥

अथ षात्वणत्विकम् —

'छन्दसि सहः' (३-२-६३) इति ण्विप्रत्ययस्य लोकेऽपीष्टत्वात् तुरं वेगिनं सहत इति तुरसाह् । 'अन्येषामपि दृश्यत' (६-३-१३७) इति दीर्घः । तुरासाह् । पदत्वे जश्त्वम्[2] । 'हो ढः' (८-२-३१) तुरासाड् ॥

### अपदान्तस्य मूर्धन्यः (८. ३. ५५)

एतदधिक्रियते । अपदान्तस्येत्युक्तिर्हरिस्त्वमित्यादौ पदान्तस्य[3] षत्वाभावार्था[4] ॥

### सहेः साडः सः (८. ३. ५६)

साड्रूपस्य सहेः सस्य मूर्धन्यः स्यात् । षत्वमित्यर्थः । तुराषाड् । साड्रूपाभावे तुरासाहौ । एवं पृतनाषाड् । पृतनासाहौ ॥

### समासेऽङ्गुलेः सङ्गः (८. ३. ८०)

अङ्गुलेः परस्य सङ्गसकारस्य समासे षः स्यात् । अङ्गुलिषङ्गः ॥

### भीरोः स्थानम् (८. ३. ८१)

भीरुष्ठानम् ॥

### अग्नेः स्तुत्स्तोमसोमाः (८. ३. ८२)

अग्निः स्तूयतेऽत्रेति सम्पदादिक्विप्याग्निष्टुत् क्रतुः अग्निष्टोमः ॥

---

१. 'तम्' ग. च. पाठः. २. 'त्वम् तुरा' क. ग. पाठः. ३. 'स्य प्रत्ययसस्य ष' ङ. पाठः. ४. 'र्थम्' ग. च. पाठः. ५. 'सस्य' इति केरळवर्मदेवादृतः पाठः.

ज्योतिरायुषः स्तोमः (८. ३. ८३)

ज्योतिष्टोमः । आयुष्टोमः ॥

मातृपितृभ्यां स्वसा (८. ३. ८४)

मातृष्वसा । पितृष्वसा ॥

मातुःपितुर्भ्यामन्यतरस्याम् (८. ३. ८५)

'विभाषा स्वसृपत्योः' (६-३-२४) इत्यलुक्पक्षे षत्वं वा स्यादित्यर्थः । मातुःष्वसा, मातुःस्वसा । पितुःष्वसा, पितुःस्वसा ॥

अभिनिसस्तनः शब्दसंज्ञायाम् (८. ३. ८६)

अस्मात्परस्य स्तनधातोः शब्दनाम्नि षः स्यात् । अभिनिष्टान इति विसर्गनाम ॥

सुविनिर्दुर्भ्यः सुपिसूतिसमाः (८. ३. ८८)

एभ्यः परस्य सुपेः सूतिसमशब्दयोश्च[1] षः स्यात् । सुपिरिति कृतप्रसारणः स्वपिरुक्तः । सुषुप्तः । विषुप्तः । निष्षुप्तः । दुःषुप्तः । क्वसौ तु षत्वे कृते द्विरुक्तेरभ्यासेऽपि षत्वश्रुतिः । विषुषुप्वान् । एवं सुषूतिः । सुषममित्यादि । कृतह्रस्वा समा, समशब्दो वायम् ॥

निनदीभ्यां स्नातेः कौशले (८. ३. ८९)

आभ्यां परस्य स्नाधातोः कौशलेऽर्थे षः स्यात् । निष्णातः । निष्णः । 'आतश्चोपसर्गे' (३-१-१३६) इति कः । नदीतरणकुशलो नदीष्ण इति शङ्करः । कुशलमात्रेऽप्यस्तीति हरः । 'सुपि स्थः' (३-२-४) इति विभागात् कः ॥

सूत्रं प्रतिष्णातम् (८. ३. ९०)

प्रतिष्णातमिदं सूत्रम् । शुद्धमित्यर्थः ॥

---

1. 'समयोश्च' ग. पाठः.

कपिष्ठलो गोत्रे (८. ३. ९१)

गोत्रादि भूते कस्मिंश्चिदृषौ वाच्य एतत् स्यात् ॥

प्रष्ठोऽग्रगामिनि (८. ३. ९२)

वृक्षासनयोर्विष्टरः (८. ३. ९३)

गावियुधिभ्यां स्थिरः (८. ३. ९५)

निपातनादलुक् । वाचि स्थिरो गविष्ठिरः । युधिष्ठिरः ॥

विकुशमिपरिभ्यः स्थलम् (८. ३. ९६)

विष्ठलम् । कुष्ठलम् । शमिष्ठलं तदधःस्थलम् । परिष्ठलम् । 'ङ्यापोः' (६-३-६३) इति शम्या ह्रस्वः ॥

अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः (८. ३. ९७)

एभ्यः स्थशब्दस्य षः स्यात् । अम्बेव तिष्ठतीत्यम्बष्ठो हस्तिपः । 'ङ्यापोः' (६-३-६३) इति ह्रस्वः । आम्बष्ठो जनपदभेदः । गोष्ठः । घञर्थे कः । भूमिष्ठः । सव्येष्ठः । 'तत्पुरुषे कृति' (६-३-१४) इत्यलुक् । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुर्वृक्षभेदः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुः करावयवः । तत्रस्थत्वादङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ॥

सुषामादिषु च (८. ३. ९८)

एषु षत्वं स्यात् । अत्र भोजः 'सुदुर्निभ्यः सामसेधसन्धेः' (स० ७-४-९६) सुषामा । दुष्षामा । निष्षामा । एवं सुषेधः, सुषन्धिरित्यादि । सेधो गतिः ॥

एवं प्रतिष्णिका शुद्धा[1] प्रतिस्नाशब्दतोऽत्र कः ।
गौरिषक्थं च नौषेचिकोर्मिर्नौषेचनं तथा ॥
सेवेर्वा सीव्यतेर्नौषेवणं दुन्दुभिषेवणम् ।
दिविषच्चेत्यनादिष्टं षत्वमत्रैव दृश्यताम् ॥

---

१. 'च' क. पाठः.

इण उत्तर एद्युक्त सः षत्वं याति नामसु ।
हरिषेणः सिन्धुषेणो नक्षत्रेभ्यस्तु वा भवेत् ॥
तेन स्याद्रोहिणीषेणो रोहिणीसेन इत्यपि ॥

प्रतिस्तब्धनिस्तब्धौ च (८. ३. ११४)

इणन्तोपसर्गाद्विहितं स्तम्भेष्षत्वमनयोर्न ॥

सोढः (८. ३ ११५)

सोढ् इत्येवंरूपस्य सहेः 'परिनिविभ्यः सेव—' (८- ३-७०) इत्यादिना प्राप्तं षत्वं न स्यात् । परिसोढुम् । निसोढा । विसोढव्यम् ॥

अनुपर्यभिनिविभ्यः स्यन्दतेरप्राणिषु (८. ३. ७२)

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्देः समासेऽप्यसमासेऽपि वा षः स्यात् । अनुष्यन्दनम् अनुस्यन्दनम् । एवं पर्यभिनिविभ्यः असमासेऽपि, अनुष्यन्दते अनुस्यन्दते । प्राणिमात्रकर्तृके न । अनुस्यन्दते मत्स्यः । अप्राणियोगे तु स्यात् । अनुष्यन्देते नौनाविकौ ॥

वेः स्कन्देरनिष्ठायाम् (८. ३. ७३)

वेः परस्य स्कन्देर्निष्ठातोऽन्यत्र कृति वा षत्वं स्यात् । विष्कन्दनं, विस्कन्दनम् । निष्ठायां तु विस्कन्नः । तिङ्यपि विस्कन्दति ॥

परेश्च (८. ३. ७४)

परेः परस्य स्कन्देः सर्वत्र वा षत्वम् । परिष्कन्दनं, परिस्कन्दनम् । परिष्कण्णः[1] परिस्कन्नः । एवं तिङ्यपि वा स्यात् ॥

परिस्कन्दः प्राच्यभरतेषु (८. ३. ७५)

परिष्कन्दः परिस्कन्द इति देवालयाभिधा ।
स परिस्कन्द इत्येव प्राच्येषु भरतेषु च ॥

आक्रम्यत इति परिस्कन्दो भृत्य इत्यन्ये । परिस्कन्दः परिभूत इति शङ्करः ॥

---

१. 'प्राग्देशे भरतेष्वपि' केरळवर्मदेवपाठः

पूर्वपदात् संज्ञायामगः (८. ४. ३)

इति णत्वम् । त्रिणेत्रः । अग इत्युक्तेर्ऋगयनो ग्रन्थः ॥

क्षुभ्नादिषु च (८. ४. ३९)

क्षुभ्नातीत्याद्याकृतिगणे णत्वं न स्यात् । नॄन् नमयतीति नृनमनः कश्चित् । नृनम इति माधवः । 'नृत्तनर्त्तननंदननगरानिवेशनिवासाग्न्यनूपनन्दिनन्दनगहननयनादीनाम्' (स० ७-४-१५९) इति गणे भोजोक्तेर्नृत्तादिपूत्तरपदेषु संज्ञायां प्राप्तं णत्वं नेत्यूह्यं । नयनस्यात्र पाठात् त्रिणयनश्चिन्त्यः । अग्रग्रामाभ्यां नयतेरनाम्न्यपि णत्वं वाच्यम् । अग्रणीः, ग्रामणीः ।

प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्श्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि (८. ४. ५)

एभ्यः परस्य वनस्यानाम्न्यपि नस्य णः स्यात् । प्रवणम् । निर्वणम् । अन्तर्वणमित्यादि । कार्श्यपीयूक्षे वृक्षभेदौ ॥

विभाषौषधिवनस्पतिभ्यः (८.४.६)

ओषधिवनस्पतिवाचिभ्यो[2] वनस्य वा णः स्यात् । दूर्वावणम् । शिरीषवणम् । बदरीवणम् । विकल्पाद् दूर्वावनमित्यादि । द्वित्र्यक्षरेभ्य एव । देवदारुवनम् । इषीकादिभ्यो न । इषीकावनम् । इरीकावनम् । मारीवनम् ॥

वाहनमाहितात् (८. ४. ८)

वाह्यगतान्निमित्तात् परस्य वाहननस्य णः स्यात् । इक्षुवाहणं शकटम् । शरवाहणम् । 'नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वादि'ति वामनः ॥

पानं देशे (८. ४. ९)

देशेऽभिधेये पूर्वपदस्थान्निमित्तात् परस्य पाननस्य णः स्यात् । पीयत इति पानम् । क्षीरं पेयमेषामिति क्षीरपाणा उशीनराः ॥

---

१. 'नदनगर' क. ग. पाठः. २. 'धिवृक्षवा' ङ. पाठः.

वा भावकरणयोः ( ८. ४. १० )

भावे-क्षीरस्य पानं क्षीरपाणं क्षीरपानं वा । करणे-क्षीरपाणं क्षीरपानं वा पात्रम् । गिरिनद्यादीनां वा । गिरिणदी । चक्रणदी चक्राणितम्बा । स्वर्णदी । सुरणिम्नगा । पक्षे गिरिनदी इत्यादि ।

प्रातिपदिकान्तनुंविभक्तिषु च ( ८. ४. ११ )

प्रातिपदिकान्ते नुमि विभक्तौ च स्थितस्य पूर्वपदस्थान्निमित्तात् परस्य नस्य णत्वं वा स्यात् । माषवापिन्‌शब्दे-माषवापिणौ । हे माषवापिन् इत्यत्र तु ,

पदान्तस्य ( ८. ४. ३७ )

पदान्तस्य नस्य णत्वं न । नुमि - माषवापाणि । अत्र नपुंसके नुम् वक्ष्यते । विभक्तौ-माषवापेण । विकल्पान्माषवापिनावित्यादि । युवादीनां न रम्ययूना । रम्यपक्वेन । रम्याह्ना ॥

एकाजुत्तरपदे णः ( ८. ४. १२ )

एकाजुत्तरपदे समास[२] उक्तं णत्वं नित्यं स्यात् । प्रतिपदिकान्ते वृत्रहणौ । नुमि-क्षीरपाणि कुलानि । विभक्तौ-क्षीरपेण ।

कुमति च (८.४.१३)

कवर्गवत्युत्तरपदेऽप्युक्तं णत्वं नित्यं स्यात् । हरिकामिणौ । हरिकामीणि । श्रीयोगेण । जिह्वामूलीयोपध्मानीयविसर्गाणामट्त्वमिष्टमिति तैर्व्यवायेऽपि णत्वं स्यात् । उरःक्रामेण । उरःपाकेण ॥

पदव्यवायेऽपि (८. ४. ३८ )

मध्ये पदेन व्यवधानेऽपि सति नस्य णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन । तद्धिते पदव्यवायेऽपीष्टम् । आर्द्रगोमयेण । गोशब्दस्य 'स्वादिषु' ( १-४-१७) इति पदत्वात् ।

---

१. 'व' क. ग. २. 'से ण' ख. पाठः.

अनितेः (८.४-१९)

उपसर्गस्थरात् परस्य अन प्राणने इति धातोर्नस्य णः स्यात् । प्राणनम् । परेर्वेष्यते । पर्यणनं, पर्यननम् । पूर्वसूत्राद् विभाषानुवृत्तेः प्रादावपि विकल्पमाह कौमुदी । प्राणनं, प्राननम् ॥

अन्तः (८-४-२०)

अनेरुक्तणत्वं पदान्तेऽपि स्यात् । प्राण् । प्राणौ । हे प्राण् । क्विबन्तोऽयम् ॥

अयनं च (८. ४. २५)

अन्तःशब्दात् परस्यायनस्यादेशे णः स्यात् । अन्तरयणमन्तरायः । देशे तु अन्तरयनो देशः ॥

कृत्यचः (८. ४. २९)

उपसर्गस्थनिमित्तयुक्तस्याचः परस्य कृत्स्थनकारस्य णः स्यात् । प्रयाणम् । प्रयाणीयम् । हलः परस्य नकारस्य न । प्रभुग्नः । निर्विण्णस्योपसंख्यानम् । अत्र पूर्वस्य कृन्नकारत्वाभावाद् उत्तरस्य हलः परत्वादप्राप्तिः । निर्भिण्णस्तु चिन्त्यः । पदव्यवाये तु णत्वं न । प्रावयानम् । आङ्व्यवाये त्वट्कुप्वाङिति स्यात् । पर्यामोहणम् ॥

णेर्विभाषा (८. ४. ३०)

उक्तनिमित्तात् परस्य ण्यन्तात् कृन्नकारस्य णो वा स्यात् । प्रयापणं, प्रयापनम् ॥

हलश्चेजुपधात् (८. ४. ३१)

उक्तनिमित्तान्वितस्य हलादेरिजुपधाद्धातोः परस्याच्पूर्वस्य कृन्नकारस्य वा णः स्यात् । प्रकोपणं, प्रकोपनम् । हलादित्वाभावे इजुपधत्वाभावेऽपि कृत्यच इति नित्यं णत्वमेव । प्रेहणम् । प्रवहणम् ।

---

१. 'सर्गयु' क. पाठः. २. 'स्या' ग. पाठः.

इजादेः सनुमः (८-४-३२)

उक्तणत्वं सानुस्वारस्य धातोश्चेदिजादेरेव। प्रेङ्खणम्। अन्यत्र न। प्रकम्पनम्। इन्वतेर्नुमि सत्यप्यनुस्वाराभावात् प्रेन्वनमित्यत्र णत्वं न। इविन्व्योरप्यर्थः॥

न भाभूपूकमिगमिप्यायिवेपाम् (८-४-३४)

एषामुपसर्गात् कृन्नस्य णत्वं न स्यात्। प्रभानम्। प्रभवनम्। प्रपवनम्। पूञ एव निषेधः। पूङस्तु प्रपवणीयः सोमः। प्रकमनम्। प्रगमनम्। प्रप्यायनम्। प्रवेपनम्। भादीनां ण्यन्ततेऽपि णत्वं न। प्रभापनम्। प्रभावनम्। प्रपावनमित्यादि॥

षात् पदान्तात् (८-४-३५)

पदान्तात् षात् परस्य णत्वं न। सर्पिष्पानम्। दुष्पानः कषायः। 'वा भावकरणयोः' (८-४-१०) इति 'कृत्यच' (८-४-२९) इति च प्राप्तिः। षकारस्य पदात् पूर्वत्व एव निषेधः। तेन सर्पिष्केणेत्यत्र प्रत्ययात् पूर्वत्वान्न।

इत्थं समासखण्डोऽयं मिळत्परिकरो गतः।
सिद्धं च प्रातिपदिकं कृत्तद्धितसमासजम्॥

राज्ञो भार्या राजभार्येत्यर्थभेदोऽस्ति किञ्चन।
वाक्ये व्यपेक्षा सामर्थ्यं वृत्तौ त्वैकार्थ्यमेव तत्॥

ऋद्धस्य राजपुरुषोऽपि च राजपुत्रो
भार्या च राजतनयः सचिवस्य चेति।
नास्त्येव वृत्तिषु मिथोऽपि हि लक्षकत्वा-
दैकार्थ्यमेव पदयोर्जलपांसुरीत्या॥

नन्दस्य पुत्रप्रणयी जनोऽयमित्यादिसंबन्धिपदे सुतादौ।
स्वार्थाभिपूर्त्तिः प्रतियोगिनैवेत्यसमार्थवत् तद्युततापि दोषः॥

स्यात् सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्य खल्वपि।
आदिराजयशो नैव तेषां नाशे विनश्यति॥

---

१. 'यः। भाव' क. ग. पाठः.

पूर्णश्चन्द्र इवेति तु विशेषणासक्तिरिवसमासे या ।
सा खलु सुबलोपाद्यैस्तद्वृत्तैर्वाक्यतुल्यतावगमात् ॥

सामर्थ्यादुपमानेनैवास्य नित्यसमासगीः ।
न तद्विशेषणैः शब्दैर्नवीनमिव पङ्कजम् ॥

नवीनं पङ्कजमिवेत्यर्थो वाच्यो हि सर्वथा ।
पूर्वैकपद्ये तन्न स्यात् पृथगेव पदं ततः ॥

महिमा त्वीदृशस्थानेष्विवशब्दं निनिन्द, तत् ।
युक्तं नित्यसमासत्वात् प्रयोगाः किन्तु दुस्त्यजाः ॥

इवशब्दो लोक एवं यजुषि व्यस्त एव सः ।
समस्त एवर्क्षु चेति प्रातिशाख्यैर्विविच्यताम् ॥

कृत्सूपपदगत्योस्तु समासक्रम उच्यते ।
विग्रहे चात्रोपपदं धातौ स्वस्वसुपा वदेत् ॥

प्रादियोगे स च स्वन्तो मध्ये वाच्योऽथ कृद्विधिः ।
ततो गतेः समासः स्यात् पश्चादुपपदस्य च ॥

तयोः सुपेत्यसम्बन्धात् समासौ प्राक् तु कृत्सुपः ।
सप्तम्योपपदे प्रादौ समासो द्विः स एव तु ॥

अथान्नाभ्यवहार्यादौ गत्योः सह समर्थयोः ।
स्वन्तयोः सकृदेवार्थात् समासः स्याद् द्विरन्यथा ॥

इति ।

महासंज्ञा इहान्वर्थाः सर्वनामपदं यथा ।
सर्वान्ययत्तदाद्या हि सर्वार्थस्यापि वाचकाः ॥

सर्वनामस्थानसंज्ञा कृत्स्नशब्दस्थितेरिह ।
शिसुटोः खल्वलोपाद्विर्न दाम्ना पशुपेतिवत् ॥

पूर्वाचार्योपहासार्थां तां वैफल्याद्गुरोऽब्रवीत् ।
कर्तरि क्विपि कृच्छब्दो येषां मध्ये हि दृश्यते ॥

---

१. 'थैरिव वृ' २. 'ताम् इति कृ' ३. 'हे तत्रो' ङ, केरलवर्मदेवाः

छत्रिन्यायात् कृतस्ते स्युरेवं कृत्यसदाख्ययोः ।
निष्ठा परिसमाप्तिः स्यात् सा च भूतार्थयोर्द्वयोः ॥
अर्थः स्यादित्यभेदेन निष्ठाख्यौ प्रत्ययावपि ।
तस्मै हितमिति ह्यर्थो यन्मध्ये ते च तद्धिताः ॥
तस्य राजन्यपत्यार्थतुल्यप्रत्ययशासनात् ।
तदर्थवन्तस्तद्राजा अपत्यप्रत्यया अपि ॥
अव्ययीभाव इत्यत्र भवतेः कर्तरीह णः ।
स्यात् तस्य पुरुषस्तत्पुरुषः षष्ठीसमासतः ॥
तेन तज्जातिजाः सर्वे रूढवत् तत्पुरुषा मताः ।
द्वयोर्गवोर्भवादिर्हि द्विगुर्यत्रैष स द्विगुः ॥
बहवो व्रीहयोऽस्येति यत्र स्यात् स तथोच्यते ।
द्वयोर्हि पदयोरेकद्रव्यवृत्त्याखिलं पदम् ॥
क्रियासम्बन्धि यत्र स्यात् स शान्तः कर्मधारयः ।

वृत्तौ नानाप्रमादा विवृतिषु कथिता माधवाद्यैश्च सर्व-
व्याख्यास्वाख्यापि दोषो बहुलमघटितं प्रक्रियाकाव्यपङ्क्तौ ।
नामव्याख्यास्वनन्तं किल तदिह महाकोविदैरप्यवर्ज्या
विभ्रान्तिश्चेत् कृशाभ्यासिनि कृशधिषणे मादृशे किं नु वाच्यम् ॥

---

## स्त्रीप्रत्ययखण्डः ।

अथ स्त्रीप्रत्ययान्तानामपि विभक्तिप्रकृतित्वात् तेऽपि कथ्यन्ते ॥

### स्त्रियाम् (४. १. ३)

इतः परं प्रातिपदिकात् स्त्रियां वाच्यायां प्रत्यया उच्यन्ते ।

क्षीणत्वमृदुलत्वादिर्वस्तुष्वपचयो हि यः ।
स स्त्रीत्वमिति भाष्योक्तं मृणाल्यादौ स योज्यताम् ॥

टाप्डाप्चापः ङीप्ङीष्ङीनः ऊङ् तिश्चेत्यष्टौ स्त्रीप्रत्ययाः ॥

## अजाद्यतष्टाप् (४. १ ४.)

अजादिगणाददन्ताच्च प्रातिपदिकात् स्त्रियां टाप् स्यात् । पकार आबिति सामान्यग्रहणार्थः ।

अस्य त्वेकानुबन्धत्वे डाप्चापोर्द्व्यनुबन्धयोः ।
आबित्युक्तौ ग्रहो न स्यात् तदर्थं टोऽपि योजितः ॥

अजा कोकिला बालेत्यादिर्गणो वक्ष्यते । एषामदन्तत्वेऽपि वक्ष्यमाणङीषादिबाधायोक्तिः । अदन्तात् – स्थिता । गता । तत्र शालायाम् इत्यादौ तु 'अव्ययादाप्सुपः' (२-४-८२) इति त्रलन्तादापो लुक् । लसन्तीतरेत्यादौ च ङीपा स्त्रीत्व उक्ते पुनरतिशयविशिष्टस्य स्त्रीत्वोक्त्यर्थं टाप् क्रियते ।

हलन्तादपि टाब् वा स्यादाशिषा च दिशा निशा ।
दृशा गिरा क्षुधा वाचा मुदा चापि रुचा त्विषा ।

टाबभावे त्वाशीर्निंडित्यादि । 'प्रत्ययस्थात् कात्'– (७ ३-४४) इतीत्त्वे पाचिका सार्विकेत्यादि ।

बहुव्रीहौ विग्रहस्थसुपा व्यवहितेऽपि टाप् ।
तस्मिन्नित्त्वनिषेधार्थमत्रासुप इतीरितम् ।

बहुपाचका पुरीति । मामकनरकयोरप्रत्ययत्वेऽपीत्त्वं वाच्यम् । मामिका । नरान् कायतीति रोदयतीति नारिका ॥

## न यासयोः (७. ३. ४५)

यत्तदोरपि परे कात्पूर्वस्यात इत्त्वं न । यका सका । यकाम् । तकाम् । आशिषि वुनश्च नेष्टम् । जीवका । जयका भूयात् । तद्धितोक्तोत्तरपदलोपेऽपि न । देवदत्तिका देवका । यज्ञदत्तिका यज्ञका । क्षिपकादीनां न । 'क्षिपकाध्रुवकाधुवकाफलकाचरकाचटकेष्टकैळकैरकाकरकावकाळकादण्डकाकन्यकामनकादीना'मिति भोजः (स० ७.१. ९६) आद्य आयुधभेदः । पुनर्द्वौ पात्रभेदौ । आद्युक्तेरन्विका नक्षत्रम् । तारका ज्योतिषि । अन्यत्र तारिका नौः ॥

---

१ 'यात' केरलवर्मदेवाः. २. 'कालहकाचर,' ३. 'काधिप्पकाकन्ध मुद्रितसरस्वतीकण्ठाभरणपाठः.

स्यात् प्रावरणभेदेऽर्थे वर्णकान्यत्र वर्णिका ।
वर्तका शकुनौ प्राचामुदीचां वर्तिकैव सा ॥
अष्टका पितृदेवत्ये क्रीता त्वष्टभिराष्टिका ।
सूतकादित्रये वा स्यात् सूतका सूतिका तथा ॥
पुत्रका पुत्रिका वृन्दारका वृन्दारिकाथवा ।

उदीचामातः स्थाने यकपूर्वायाः (७- ३- ४६)

यकपूर्वस्य स्त्रीप्रत्ययरूपस्याकारस्य स्थाने योऽकारः तस्य कात् पूर्वस्यापि परे इद्वा स्यात् । आर्याशब्दात् कप्रत्यये 'केऽणः' (७-४-१३) इति ह्रस्वे च कृते आर्यक पुनश्चापि इत्त्वविकल्पः। आर्यिका। आर्यका। चटकिका । चटकका । शुष्किकेत्यत्र तु निष्ठाकत्वस्यासिद्धत्वाद् न विकल्पः । आतः स्थान इत्युक्तेः सांकाश्यिका । अत्र ह्यकेति प्रत्ययः । आतः स्त्रीप्रत्ययस्येत्युक्तेः शुम्भंयिका । अत्र शुभंया इति क्विबन्तात् के ह्रस्वः । धात्वन्तयकारककारयोस्तु नित्यम् । सुनयिका सुपाकिका। त्यक्त्यपोश्च नित्यम् । दाक्षिणात्यिका। इहत्यिका ॥

भस्त्रैषाजाज्ञाद्वास्वाऽनञ्पूर्वाणामपि (७. ३. ४७)

एषामनञ्पूर्वाणां नञ्पूर्वाणामपि अत इद्वा स्यात् । भस्त्रिका। भस्त्रका। एषिका। एषका। अजिका। अजका। ज्ञिका। ज्ञका। द्विके। द्वके। स्विका। स्वका। नञ्पूर्वाणां – अभस्त्रिका अभस्त्रकेत्यादि। एषाद्वयोर्नञ्पूर्वयोर्नेत्त्वम् । अनेषका। अद्वके । एषेत्युक्तेरेतदो द्विवचनादौ नित्यमित्त्वम्। एतिके। एतिकाः। भस्त्रादेरुपसर्जनत्वेऽपीत्त्वं वा स्यात्। धृतभस्त्रिका। धृतभस्त्रका ॥

अभाषितपुंस्काच्च (७. ३. ४८)

नित्यस्त्रीलिङ्गात् के टाप्यत इद्वा स्यात् । मालिका मालका । समासेऽपि स्यात् । सन्मालिका । सन्मालका ।

एषां यदा बहुव्रीहौ कपि ह्रस्वे कृतेऽथ टाप्।
तत्रापि नेद् भवेद् बद्धमालका बद्धमालिका ॥

## आदाचार्याणाम (७. ३. ४९)

केषाञ्चिन्मते नित्यस्त्रीलिङ्गानामत आत् स्यात्। मालाका इति ।

## ऋन्नेभ्यो ङीप् (४. १. ५)

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । ङकारो ङीति सामान्यग्रहणार्थः । पः स्वरार्थः । कर्त्री । कामिनी । भस्यादल्लोपः। श्चुत्वम् । राज्ञी ॥

श्वन् ई । मघवन् ई ,

## श्वयुवमघोनामतद्धिते (६. ४. १३३)

भसंज्ञानामन्नन्तानामेषामतद्धिते परे प्रसारण स्यात् । शुनी । मघोनी ॥

## उगितश्च (४. १. ६)

यथाकथंचिदुगितः शब्दात् स्त्रियां ङीप् स्यात् । सर्वादिषु भवतु इत्युदित् पठ्यते । भवती । ' मघवा बहुळम् ' (६.४.१२८) इति तृत्वे उगित्त्वान्मघवती । श्वयुवेति । प्रसारणं त्वन्नन्तत्व[1] एवेष्टम् । मतुप उगित्त्वात् श्रीमती । ईयसुनः श्रेयसी । एवं प्राप्तः श्रीमाननयेति प्राप्तश्रीमती । प्राप्तप्रेयसी[2] । पुंसो डुंसुन्नन्तत्वेनो[3]गित्त्वात् वीरपुंसी सभा। क्वसुः सेदिवस् ई । 'वसोः सम्प्रसारणम्' (६ ४-१३१) इति वस्योत्त्वे वलादिनाशादिण्निवृत्तिः । सेदुस् ई । आदेशसत्वात् षः सेदुषी एवं विद्वस् ई । प्रसारणे विदुषी । शतृ -- तन्वती ।

## आच्छीनद्योर्नुम् (७. १. ८०)

अवर्णान्तादङ्गात् परस्य शतुः[4] शीनद्योः परयोर्वा[5] नु स्यात नदीति स्त्रियामीकार उक्तः । करिष्यन्ती । करिष्यती । स्यप्रत्ययात् परः शता । तुदन्ती । तुदती । अत्र शविकरण परः । आकारात्तु यान्ती । याती ।

---

१. ' णत्वं नान्तत्व ' क ग. पाठः २. श्रे' केरळग्रमंदेवाः ३. 'सोऽसु-न्नन्तत्वे' ग. ख. पाठः ४. 'शत्वा' क. पाठः- ५. 'द्योर्वा' क. पाठः

शप्श्यनोर्नित्यम् (७. १. ८१)

आभ्यां परस्य शतुः शीनद्योः परयोर्नित्यं नुं स्यात् । भवन्ती । तुष्यन्ती । आत् परत्वाभावे तु शतुर्नुम् न । अदती । जुह्वती । सुन्वती । रुन्धती । तन्वती । क्रीणती । अत्र 'श्नाभ्यस्तयोः —' (६-४-११२) इत्याल्लोपादवर्णाभावः । एवञ्च

स्यप्रत्ययात्तुदादिभ्यो लुम्यादन्ताच्च वा भवेत् ।
शप्श्यनोर्नित्यमन्येषु षट्सु नुम् नेति सङ्ग्रहः ॥

धातोरुगितो ङीम्नेति वाच्यम् । राजृ दीप्तौ । सम्राडियम् । अञ्चत्यन्तस्य ङीब् वाच्यः । प्रात अच् ई । दीर्घे कर्तव्ये पूर्वं यणादेशो नेष्टः ॥

अचः (६. ४. १३८)

लुप्तनकारस्याञ्चतेर्भत्वेऽकारस्य लोपः स्यात् । प्रतिच् ई ॥

चौ (६. ३. १३८)

लुप्तनकाराकारेऽञ्चतौ परे पूर्वस्य दीर्घः स्यात् । प्रतीची । एवं प्राची । समीची । सध्रीची । विष्वद्रीची । अदद्रीची । अमुद्रीची । अमुमुइ अच ई । अलोपदीर्घयोः कृतयोः अमुमुईची । यणादेशे कार्ये उत्वमत्वयोरसिद्धत्वान्न सन्धिः । एवमदमुईची ।

उद ईत् (६. ४. १३९)

उदीची ॥

वनो र च (४. १. ७)

वन्नन्तात् स्त्रियां ङीप् स्याद् रश्चान्तादेशः । ववानपि धीवरी । पारदृश्वरी । बहुव्रीहेर्वेष्यते । बहुधीवा । बहुधीवरी ।

न हशन्ताद् वनो ङीब्रौ सहयुध्वा चमूरिति ।
इष्टौ णान्तात्तु कौमुद्यामोणेर्वनिबवावरी ॥

पादोऽन्यतरस्याम् (४- १- ८)

पाच्छब्दान्तात् स्त्रियां ङीब्वा स्यात् । भत्वात् पद्भावः । द्विपदी । द्विपात् ॥

टाबृचि (४ १- ९)

ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । पद्भावः । द्विपदा ॥

न षट्स्वस्रादिभ्यः (४. १. १०)

षट्संज्ञेभ्यः स्वसा माता ननान्दा दुहिता तिसृ ।
याता चतसृ चेत्येभ्यश्चापि स्त्रीप्रत्ययो न हि ॥

नान्तसंख्यानां षट्संज्ञत्वान्ङीबभावः । पञ्च स्त्रियः । अत्र प्रातिपदिकान्तत्वान्नलोपे कृते त्वदन्तत्वाट्टापि प्राप्ते न षट्स्वस्रादिभ्य इत्येव सोऽपि प्रतिषेध्यः । तत्र नान्तत्वनाशेन षट्त्वाभावादप्रतिषेधे प्राप्ते—

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति (८. २. २)

सुब्विधौ च स्वरविधौ षट्संज्ञाया विधावपि ।
कृन्निमित्ते तुग्विधौ च नलोपोऽसिद्धवद् भवेत् ॥

इति नलोपस्यासिद्धत्वेन षट्संज्ञत्वान्न टाप् । पञ्च ॥

मनः (४. १. ११)

मन्नन्तात्प्रातिपदिकात् स्त्रियां ङीब्न । सीमा सीमानौ सीमानः । अतिप्रेमा अतिप्रेमाणौ । तत्पुरुषोऽयम् ॥

अनो बहुव्रीहेः (४- १- १२

अन्नन्ताद् बहुव्रीहेर्ङीब् न । बहुयज्वा । बहुयज्वानौ ।

डाबुभाभ्यामन्यतरस्याम् (६. १. १३)

मन्नन्तात् प्रातिपदिकादन्नन्ताच्च बहुव्रीहेर्डाब् वा स्यात् ।

टिलोपः । सीमा, सीमे । बहुयज्वा, बहुयज्वे । विकल्पात् प्रागुक्तो नकारान्तोऽपि ॥

अन उपधालोपिनोऽन्यतरस्याम् (४. १. २८)

अन्नन्तादुपधालोपिनो बहुव्रीहेर्वा[1] ङीप् स्यात् । विकल्पेन डाप् च ङीब्निषेधश्च ।

'न संयोगाद् वमन्ता'दित्युपधालोपनिह्नवात् ।
तद्वर्जिता इहान्नन्ता उपधालोपिनो मताः ॥

बहुराज्ञी बहुराज्ञ्यौ । बहुराजा बहुराजे । बहुराजा बहुराजानौ ॥

अनुपसर्जनात् (४. १. १४)

इतः परमनुपसर्जनभूतेभ्य एव प्रत्यय उच्यते ।

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्-क्वरप्[2]ख्युनाम् (४. १. १५)

अनुपसर्जनेभ्योऽदन्तेभ्यष्टिदादिभ्यः स्त्रियां ङीप् स्यात् । 'चरेष्टः' (३. २-१६) । वनचर ई । 'यस्य' (६ ४. १४८) इति लोपः । वनचरी । धेटष्टित्त्वात् स्तनन्धयी । धेटः खश्येव ङीबिति माधवः । तेन 'पाघ्राध्माधेट'— (३ १-१२७) इति शे कृते धया । ढ – आग्नेयी । अण् – कुम्भकारी । ऐन्द्री । एवं सौरी । आगस्ती । अत्र सूर्यागस्त्यसम्बन्धित्वात् ङ्यां यलोपः । अञ्–औत्सी । द्वयसजादौ - ऊरुद्वयसी, ऊरुदघ्नी, ऊरुमात्री । तयप् – द्वितयी । अयजादेशस्य स्थानिवत्त्वाद् द्वयी त्रयी । ठक्–लाक्षिकी । कालाट्ठञ् (४ ३ ११) । मासिकी । कञ् । तादृशी । क्वरप् – इत्वरी । ख्युन् – आढ्यङ्करणी । अनुपसर्जनादित्युक्तेर्बहुवनचरा भूरित्यादौ न । नञ्स्नञीकक्ख्युंस्तरुणतलुनानां[3] च वाच्यम् । स्त्रैणी । पौंस्नी । शाक्तीकी । तरुणी । तलुनी । द्वौ कामिनीमात्रार्थौ वयोर्थौ च स्तः । अनयोर्गौरादित्वान्ङीषप्यस्ति । स्वरभेदः ।

---

१. 'पिब' क पाठः २. 'पः' इत्येव भाष्ये सिद्धान्तकौमुद्यां च. ३. 'कक्-रख्युंस्तरुण' इति कौमुदी ।

यञश्च (४. १. १६)

यञन्ताद् ङीप् स्यात्। 'यस्य-'(६-४-१४८) इति लोपे 'हलस्तद्धितस्य'(६-४-१५०) इति यलोपः। गार्गी। अनपत्याद् यञो न ङीप्। द्वीपे भवा द्वैप्या॥

प्राचां ष्फ तद्धितः (४. १. १७)

यञन्तात् प्राङ्मते स्त्रियां ताद्धिताख्यः ष्फः स्यात्। तद्धितान्तत्वात् प्रातिपदिकत्वे,

षिद्गौरादिभ्यश्च (४. १. ४१)

षितः प्रातिपदिकाद् गौरादेश्च स्त्रियां ङीष् स्यात्। गार्ग्यायणी। उदङ्मते तु पूर्वसूत्रेण गार्गी॥

सर्वत्र लोहितादिकतन्तेभ्यः (४. १. १८)

गर्गाद्युक्तेभ्यो लोहितादिभ्यः कतन्तेभ्यः सर्वाचार्यमते ष्फः स्यात्। लौहित्यायनी। बाभ्रव्यायणी। कात्यायनी। शाकलाच्चेष्टम्[1]। शाकल्यायनी।

कौरव्यमाण्डूकाभ्यां च (४. १. १९)

कौरव्यायणी। माण्डूकायनी। चकारादासुरेश्च[2]। असुरस्यापत्यमासुरिः। ततः स्त्रियामासुरायणी। दाक्षायणी। गौरीत्यप्येवमेवेति स्वामी॥

वयसि प्रथमे (४. १. २०)

वृद्धत्वात् पूर्वं प्रथमवय इति हरः। तदर्थाददन्ताद् ङीप् स्यात्। कुमारी। किशोरी। वधूटचिरण्टशब्दौ यौवनार्थौ वधूटी। चिरण्टी। वृद्धत्वे[3] तु वृद्धा। स्थविरा। अनदन्तत्वाच्छिशुः।

द्विगोः (४. १. २१)

अदन्ताद् द्विगोः स्त्रियां ङीप् स्यात्। 'अकारान्तोत्तरपदो द्विगुः स्त्रियाम्' (वा० २-४-१७) इति द्विगोः क्लीबत्वबाधः। त्रिलोकी। धुर

---

१. 'श' क. पाठः. २. 'श्रेष्यते' केरळवर्मदेवपाठः ३. 'त्वे तु' क. पाठः

'ऋक्पूः–' (५–४–७४) इत्यप्रत्यये कृते ङीप् । द्विधुरी । त्रिधुरी । 'आबन्तो वा स्त्रियाम्' । (वा० २-४-१७) पञ्चानां मालानां समाहार इत्यत्र समाहारस्यैव विभक्तिभेदाद् 'एकविभक्ति च–' (१–२–४४) इति मालाशब्दस्योपसर्जनत्वाद्ध्रस्वः । एवमदन्ताद् ङीप् । पञ्चमाली, पञ्चमालम् । 'अनो नलोपश्च वा च स्त्रियाम् (वा० २-४-१७) । स्त्रीत्वे ङीप् । पञ्चकर्मी, पञ्चकर्मम् । पञ्चतक्षी, पञ्चतक्षम् । पात्रादौ स्त्रीत्वं न । पञ्चपात्रम् । चतुर्युगम् । त्रिभुवनम् । पञ्चगवम् । त्रिपथम् । पञ्चगजम् । त्रिपुरं च केचित् । आकृतिगणश्चायम् ॥

अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि (४. १. २२)

अपरिमाणान्ताद् बिस्ताद्यन्ताच्च द्विगोस्तद्धितलुकि न ङीप् स्यात् । द्वौ वर्षौ भृता द्विवर्षा । द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । क्रीताद्यर्थे 'अध्यर्धपूर्व-' (५-१-२८) इति लुक् । परिमाणान्तात् तु ङीबेव । द्विप्रस्थी शाटी । तत्क्रीतेत्यर्थः ॥

काण्डान्तात् क्षेत्रे (४. १. २३)

काण्डान्ताद् द्विगोस्तद्धितलुकि सति क्षेत्रे वाच्ये न ङीप् । काण्डं मानदण्डः । शतकाण्डा केदारभूः । द्विगोर्नित्यं लुगिति प्रमाणार्थस्य मात्रचो लुक् । अक्षेत्रे तु द्विकाण्डी रज्जुः ॥

पुरुषात् प्रमाणेऽन्यतरस्याम (४. १. २४)

प्रमाणवाचिपुरुषान्ताद् द्विगोस्तद्धितलुकि वा ङीब् न स्यात् । द्विपुरुषा द्विपुरुषी वा भित्तिः ॥

संख्याऽव्ययादेर्ङीप् (४. १. २६)

संख्यादेरव्ययादेरप्यूधोन्ताद् बहुव्रीहेः स्त्रियां ङीप् स्यात् । 'ऊधसोऽनङ्' (५-४-१३१) । द्व्यूध्नी । निरूध्नी । संख्यादित्वाद् द्विविधोध्नीत्याद्यपि ॥

१. 'न्तत्वाद् ङीप्' केरलवर्मदेवपाठः

## दामहायनान्ताच्च ( ४. १. २७ )

संख्यादेर्दामहायनान्ताद् बहुव्रीहेः स्त्रियां ङीप् स्यात् । द्विदाम्नी । द्विहायनी । 'त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्' । त्रिहायणी । चतुर्हायणी । ङीम्णत्वे वयस्येव । द्विहायना त्रिहायना वा शाला ॥

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ( ४. १. ३० )

एषां संज्ञाच्छन्दसोर्ङीप् स्यात् । तत्र संज्ञायां केवली, मामकी आर्यकृतीत्यादि ।

अनाम्नि टाप् स्यात् सर्वेभ्यो यौ तु मामकभेषजौ ।
तस्येदमाद्यणन्तौ द्वौ तयोश्चानाम्नि टाब् भवेत् ॥
तत्रोक्ता मामिका पूर्वं भेषजां पश्यतोपाधिम् ।
भिषजोऽणि कृतेऽप्यादेरेत्त्वमत्र निपातनात् ॥

## अन्तर्वत्पतिवतोर्नुक् ( ४. १. ३२ )

एतयोः स्त्रियां नुक् स्यात् । मतुप उगित्त्वाद् ङीप् । अन्तर्वत्नी । पतिवत्नी । निपातनाद् वत्वम् । गर्भिण्यां भर्तृपत्यां चैवेष्टम् । अन्यत्र पतिमती भूः ॥

## पत्युर्नो यज्ञसंयोगे (४. १. ३३ )

यज्ञसंयोगे द्योत्ये स्त्रियां पत्युरन्त्यस्य नः स्यात् । नान्तत्वे ङीप् । पत्नी । अन्यत्र गवां पतिः स्त्री । वृषलस्य पत्नीत्युपमानात् ।

## विभाषा सपूर्वस्य ( ४. १. ३४ )

पूर्वपदयुक्तस्य पत्युर्नो वा स्यात् । महीपतिः महीपत्नी । वशीकृतपतिः वशीकृतपत्नीति बहुव्रीहावपि ।

## नित्यं सपत्न्यादिषु ( ४. १. ३५ )

एषु (स)पूर्वपदत्वेऽपि नित्यं नत्वम् । आद्युक्तेरेकवीरपिण्डभर्तृपुत्रेभ्यः । एकपत्नीत्यादि ॥

पूतक्रतोरै च (४. १. ३६)

अस्य स्त्रियामन्त्यस्यैत्वं ङीप् च स्यात् । पूतक्रतोरिन्द्रस्य स्त्री पूतक्रतायी । एतदादित्रिस्त्री पुंयोग एवेष्टा । तेन पूताः क्रतवोऽनयेति पूतक्रतुः स्त्री ॥

*

वृषाकप्यग्निकुसितकुसीदानामुदात्तः (४. १. ३७)

एषामुदात्त ऐकारो ङीप् च स्यात् । हरो विष्णुरिन्द्रपुत्रश्च कश्चिद् वृषाकपिः । वृषाकपायी । अग्नायी । कुसितायी । कुसीदायी ॥

मनोरौ वा (४. १. ३८)

मनोरौत्वङीपौ प्राग्वदैत्वङीपौ च वा स्तः । विकल्पात्केवलश्च । मनोः स्त्री मनावी , मनायी , मनुः ॥

वर्णादनुदात्तात्तोपधात् तो नः (४ . १. ३९)

अनुदात्तान्ताद्वर्णवाचिनः तोपधाद्वा ङीप् स्यात् तकारस्य नश्च एनी, एता । श्येनी, श्येता । लोहिनी लोहिता । अदन्तादेव । शितिः स्त्री । पिशङ्गाच्च । पिशङ्गी । असितपलितयोर्नेष्टम् । असिता, पलिता । अनयोस्तकारस्य क्रादेशो ङीप् चेष्टः । असिक्नी । पलिक्नी ॥

अन्यतो ङीष् (४. १. ४०)

तोपधभ्योऽन्यतो वर्णादनुदात्तान्ततोऽत्र ङीष् ।
शबली चापि सारङ्गी कल्मषी ङीष्फलं स्वरे ॥
भ्रमरोत्करकल्माषाः कुसुमानां समृद्धयः ।
शबला तटभूश्चेति प्रयोगौ त्वर्शआद्यचि ॥

षिद्गौरादिभ्यश्च(४. १. ४१) ष्वुन् - नर्तकी । खनकी । गौरी । मनुष्यमत्स्यक्रोष्टनडुहोऽत्र पठ्यन्ते । मनुष्यस्य 'हलस्तद्धितस्य' (६-४-१५०) इति यलोप इति माधवः । मनुषी । 'सूर्यतिष्ये'-ति मत्स्यस्य ङ्यां यलोपः । मत्सी ॥

* दीर्घमध्यः कुसीदशब्दः काशिकारीत्या ह्रस्वमध्य इति तु कौमुदी ।

स्त्रियां च (७. १. ९६)

क्रोष्टुशब्दः स्त्रियां तृजन्तवद्रूपं भजते । क्रोष्ट्री । अनडुहः स्त्रियामामागमो वा वाच्यः । अनडु आह् ई । यण् । अनड्वाही, अनडुही । अनित्यः षितां ङीष् । दंष्ट्रा ॥

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु (४. १. ४२)

एभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यात् ।

वृत्तिर्जानपदीति स्यादन्यत्रोत्साद्यणोऽत्र ङीप् ।
कुण्डीत्यमत्रे गोणी च व्रीह्याद्याधानभाजने ॥
स्थलीत्यकृत्रिमा भूमिः स्थलं[2] स्यात् कृतकस्थलम्[3] ।
भाजी यवागूर्नागी तु स्थूला नागा त्विहायता ॥
काळी तु वर्णे नीलात् तु वस्त्रादन्यत्र ङीष्विधिः ।
प्राण्योषध्योः स वक्तव्यो नीली गौरथवौषधिः ॥
संज्ञायां वेति वक्तव्यं नीली नीला च काचन ।
प्राणिन्यपि तु नीलेयं कोकिलेत्यादि दृश्यते ॥
तेन प्राणिनि नीलेति चिन्त्यमित्याह वामनः ।
अयोविकारः खड्गादिः कुशीत्युक्तो मुरारिणा ॥
कामुकी मैथुनेच्छुः स्याद् धनादीच्छुस्तु कामुका ।
केशबन्धस्तु कबरी कबरा कर्बुरा भवेत् ॥

शोणात् प्राचाम् (४. १. ४३)

प्राच्यमतेऽस्मान्ङीष् । शोणी । अन्येषां शोणा ॥

वोतो गुणवचनात् (४. १. ४४)

उदन्ताद् गुणवचनाद् वा ङीष् । मृद्वी, मृदुः । खरोः संयोगोपधाच्च न । खरुः परुषा पाणिग्रहोत्कण्ठावती वा । एवं पाण्डुः ॥

---

१. 'स्य', क. पाठः २. 'ला' ३. 'ले' इति केरलवर्मदेव पाठः.

बह्वादिभ्यश्च (४. १. ४५)

वा ङीष् स्यात् । बह्वी, बहुः । पद्धती, पद्धतिः । कृदिकारादक्तिनो वा ङीष् वाच्यः । अकृतोऽपीत्येके । आजी, आजिः । रात्री, रात्रिः । अकृतः – पक्षती, पक्षतिः । अत्राक्तिन इत्युक्तेः क्तिजादेरपि स्यात् । रती, रतिर्वा कामभार्या । हानी, हानिः । क्तिनस्तु मतिः, कृतिः ॥

भुवश्च (४. १. ४७)

उकारान्ताद् भुवो वेदे ङीष् लोकेऽप्याह माधवः ।
विभ्वी प्रभ्वी च वर्षाभोर्वर्षाभ्वी स्यादुदन्ततः ॥

ऊदन्तत्वपक्षे तु स्त्रियामपि वर्षाभूरेव ॥

पुंयोगादाख्यायाम् (४. १. ४८)

या पुमाख्या पुंयोगाल्लक्षणया स्त्रियां वर्तते ततो ङीष् स्यात् । गिरिशस्य भार्या गिरिशी ।

क्वचित् पुत्र्यामपि हरः पुंयोगे ङीषमिच्छति ।
केकयी केकयसुता देवकी देवकात्मजा ॥

अदन्तादिति सर्वत्र योज्यमिति स्त्रीसूत्रे हरोक्तेर्भानोः स्त्री भानुरित्यादौ नेत्यूह्यम् । 'पालकान्तान्नेति वाच्यम्' । गोपालिका । भूपालिका । 'सूर्याद्देवतायां चाब्वाच्यः' । सूर्यस्य भार्या देवस्त्री चेत् सूर्या । मानुषी कुन्त्यादिश्चेत् सूरी । सूर्यस्य ङ्यां यलोपः ॥

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् (४. १. ४९)

इन्द्रादेः स्त्रियां ङीषानुगागमश्च स्यात् । इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । ब्रह्माणी सूर्याणी च कौमुद्याम्[1] । 'हिमारण्ययोर्महत्त्वे' । महद्धिमं हिमानी ।

---

१. 'द्या' क. पाठः.

महदरण्यमरण्यानी । 'यवाद्' दोषे । यवानी दुष्टयवभेदः । 'यवनाल्लिप्याम्' । यवनानी लिपिः । 'मातुलोपाध्यायाभ्यां वा' । मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । 'अस्या-पुंयोगे वा ङीष् वाच्यः' । उपाध्याया उपाध्यायी चाध्याप-यित्री स्त्री । 'आचार्यादणत्वं च' । आचार्यानी, आचार्यी । अपुंयोगे त्वाचार्या । 'आर्यक्षत्रियाभ्यां वा स्वार्थे' । आर्याणी । आर्या । क्षत्रियाणी, क्षत्रिया । पुंयोगे तु ङीषेव । आर्यी, क्षत्रियी ॥

क्रीतात्करणपूर्वात् (४. १. ५०)

करणादेरदन्तात् क्रीतशब्दाद् ङीष् स्यात् । पणेन क्रीता पणक्रीती । अदन्तादित्युक्तेः पूर्वं टाब्विवक्षायां न । धनक्रीता ॥

क्तादल्पाख्यायाम् (४. १. ५१)

करणादेः क्तान्तादल्पत्वे द्योत्ये ङीष् स्यात् । चन्दनेन किञ्चिल्लिप्ता चन्दनलिप्ती । सुवर्णभूषिती । वचोलालिती । अन्यत्र चन्दनानुलिप्ता ॥

बहुव्रीहेश्चान्तोदात्तात् (४. १. ५२)

अस्वाङ्गपूर्वपदाद्वा (४. १. ५३)

क्तान्तादन्तोदात्ताद् बहुव्रीहेर्ङीष् स्यात् । अस्वाङ्गपूर्वपदात्[1] तु वा स्यात् । स्वस्ववर्जितजातिपूर्वः कृतमितजातप्रतिपन्नवर्जैः सर्व-क्तान्तैः बहुव्रीहिरत्रान्तोदात्तोक्त्या ग्राह्य इति भोजः । अत्र स्वाङ्ग-रूपजातिपूर्वान्नित्यम् । अन्यजातिपूर्वात् तु क्तान्ताद् विकल्प इति सूत्रद्वयार्थः । स्वाङ्गाद्—ऊरुभिन्नी, गलखण्डिती । अस्वाङ्गात्—सुरा-पीती, सुरापीता । जातेर्निष्ठाया वा परनिपातोक्त्या सर्वत्र परत्वम् । 'पाणिगृहीती भार्यायाम्' । पाणिगृहीतान्या ॥

---

१. 'र्वात्' क. ख. पाठः.

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् (४. १. ५४)

असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्ताद् वा ङीष् स्यात् । सुमुखी, सुमुखा । अतिकेशी, अतिकेशा । संयोगोपधात् तु न ! सुवक्त्रा । 'अङ्गगात्रकण्ठेभ्यो वेष्यते' । स्वङ्गी, स्वङ्गेत्यादि ।

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत् तथायुतम् ॥

द्रवत्वेन स्वाङ्गत्वाभावाद् बहुस्वेदा । मूर्तिमत्त्वाभावात् सुज्ञाना । प्राणिस्थत्वाभावात् सुमुखा शाला । विकारजत्वाद् बहुशोफा । सम्प्रत्यप्राणिस्थमपि प्राणिनि दृष्टं चेत् स्वाङ्गम् । बहुकेशी रथ्या । अप्राणिन्यपि प्राणिवदेव योजितं चेत् स्वाङ्गम् । सुस्तनी प्रतिमा ॥

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च (४. १. ५५)

एतदन्ताद् ङीष्वा । सुनासिकी, सुनासिका । कृशोदरी कृशोदरेत्यादि । 'पुच्छाच्च वाच्यम्' । सुपुच्छी, सुपुच्छा । 'कबरमणिविषशरेभ्यो नित्यम्' । । कबरपुच्छी मयूरी । कबरं नानावर्णम् । मणिपुच्छी, विषपुच्छी, शरपुच्छीति वृश्चिकीनामानि । 'उपमानात् पक्षपुच्छाभ्याम्' । श्येनपक्षी, श्येनपुच्छी सेना ॥

न क्रोडादिबह्वचः (४. १. ५६)

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । सुक्रोडा । सुगळा । बह्वचः सुजघना । स्वधरा ॥

सहनञ्विद्यमानपूर्वाच्च (४. १. ५७)

एतत्पूर्वात् स्वाङ्गान्न ङीप् । सहकेशा । अनासिका । विद्यमानोदरा ॥

नखमुखात् संज्ञायाम् (४. १. ५८)

शूर्पणखा । 'पूर्वपदात् संज्ञायाम्—' (८-४-३) इति णः । संज्ञात्वाविवक्षायां शूर्पनखीति नाथः । गौरमुखा ॥

वाहः (४. १. ६१)

वाहन्ताद् ङीष् स्यात् । 'वहश्च' (३-२ ६४) इति च्छान्दसण्विप्रत्ययस्य लोकेऽपीष्टत्वाद् भारवाह्-ई'वाह ऊठ्' (६. ४. १३२) इति वस्योठ्, पूर्वरूपम् । 'एत्येधति-' (६. १. ८९) इति वृद्धिः । भारौही ॥

सख्यशिश्वीति भाषायाम् (४. १. ६२)

एतौ लोके स्तः । (सखी) । अशिश्वी शिशुहीना ॥

जातेरस्त्रीविषयादयोपधात् (४. १. ६३)

स्त्रीलिङ्गनियतान् योपधांश्च विना जातिवाचिभ्यो ङीष् स्यात् । मृगी । सिंही । ब्राह्मणी । घटी । यक्षी । यक्षिणी तु यक्षरूपमस्या अस्तीति इनावृन्नेभ्यो ङीप्यश्विनीवत् साध्या । अनुपसर्जनाधिकारात् बहुमृगा भूरित्यादौ न । गोत्रचरणयोरपि जातित्वमिष्टम् । गोत्रमित्यपत्यमुक्तम् । नाडायनी । कठी । बह्वृची । स्त्रीनियतात् तु न । बलाका । योपधाच्च न । वैश्या ॥

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च (४. १. ६४)

पाकाद्युत्तराज्जात्यर्थात् स्त्रीनियतत्वेऽपि ङीष् स्यात् । ओदनपाकी । शङ्कुकर्णी । सालपर्णी । शङ्खपुष्पी । डाडिमफली । गोवाली ॥

इतो मनुष्यजातेः (४. १. ६५)

ङीष् स्यात् । अवन्ती । दाक्षी ॥

ऊङुतः (४. १. ६६)

उदन्तान्मनुष्यजातेः स्त्रियामूङ् स्यात् । कुरु ऊ । सवर्णदीर्घः कुरू ॥

अन्तादिवच्च (६. १. ८५)

एकादेशः पूर्वस्यान्तवत् परस्यादिवच्च स्यात् । इति कुरुशब्दस्य प्रातिपदिकस्यान्तवद्भूत ऊङित्यूङन्तस्यापि प्रातिपदिकत्वे स्वाद्युत्पत्तिः कुरूः । अत्राप्ययोपधादेव । व्याधस्त्री मृगयुः । अप्राणिजातेश्चारज्वादेरिति वाच्यम् । वेति भोजः । चञ्चूः चञ्चुः ॥

ऊदन्तादप्यसावूङ् स्यात् कर्कन्ध्वादौ स्वराय तत् ।
गोस्त्रियोर्ह्रस्वतार्थं च निरङ्गाबुः पयःकणः ॥

एवं भ्रूशब्दादप्राणित्वादूङि उपसर्जनह्रस्वे सुभ्रुशब्दस्य स्त्रीवाचिनो मनुष्यजात्यूङि सुभ्रूरिति शङ्करः । तत्र 'हे सुभ्रु' इति सम्बुद्धौ ह्रस्वः फलम् । 'हरितायत्तरूमशोकवनिकामित्यप्राणिविशेषणत्वमात्रेऽपि भट्टयुक्तिश्चिन्त्या । प्राणिजातेस्तु[1] न । धेनुः । रज्ज्वादेश्च[2] न । रज्जुः । हनुः । हनूमत'स्त्वन्येषामपि दृश्यत' (६-१-१३७) इति वा दीर्घ इति शङ्करः ॥

बाह्वन्तात् संज्ञायाम् ( ४. १. ६७ )

ऊङ् स्यात् । मद्रबाहूः काचित् ॥

पङ्गोश्च ( ४. १. ६८ )

स्त्रियामूङ् स्यात् । पङ्गूः । 'श्वशुरः श्वश्र्वा' (१ २. १७१) इत्युक्तेः श्वश्रूः सिद्धा ॥

ऊरूत्तरपदादौपम्ये ( ४. १. ६९ )

औपम्ये द्योत्ये ऊर्वन्तात् स्त्रियामूङ् स्यात् । रम्भोरूः ॥

संहितस[3]फलक्षणवामादेश्च ( ४. १. ७० )

संहितोरूः । सफलोरूः । सफेति पाठे सफोरूः । संश्लिष्टोरुरित्यर्थः । लक्षणोरूः । वामोरू[4]ः । कोमलोरूरित्यादौ स्त्रीजातिविवक्षायाम् 'ऊङुत' (४. १. ६६) इत्यूङिति नाथः । मधुशब्दाच्छन्दस्यूङुक्तः । तस्य लोकेऽपीष्टत्वात् माधूकरीं वृत्तिमित्यादि साध्यम् ॥

संज्ञायाम् (४. १. ७२)

संज्ञायां नाम्नि कद्रुकमण्डल्वोरूङ् स्यात् । कद्रूः । कमण्डलूः ॥

शार्ङ्गरवाद्यञो ङीन् ( ४. १. ७३ )

शार्ङ्गरवादेरञन्ताच्च जातिवाचिनो ङीन् स्यात् । स्वरे भेदः ।

---

१. 'स्तु धेनुः', २. स्तु' ग. पाठः ३. 'शफलक्षणे'ति काशिकाकौमुदीसम्मतः पाठः. ४. 'रूः । संहितसहाभ्यां च वाच्यम् । संहितोरूः । सहोरूः । द्वयोः संश्लिष्टोरुरित्यर्थः । वरोरूः । कोमलोरूः इति केरलवर्मदेवपाठः.

शार्ङ्गरवी । बैदी । अजात्यन्तात् तु ङीबुक्तः । 'नृनरयोर्वृद्धिश्च' (स० ३. ४. १२५) द्वयोरपि नारी ॥

यङश्चाप् ( ४. १. ७४ )

यङन्तात् स्त्रियां चाप् स्यात् । चः स्वरार्थः । 'अणिञोरनार्षयोः —' (४. १ ७८) इति ष्यङ् । कौमुदगन्ध्या । वाराह्या । 'वृद्धेत्कोसल' (४. १. १७१) इति ञ्यङ् । कौसल्या ॥

आवट्याच्च (४. १. ७५ )

गर्गादियञन्तादस्माच्चाप् । आवट्या । षाच्च यञश्चाप् वाच्यः । गर्गादियञ् । गौकक्ष्या । पौतिमाष्या । एष्वावट्यायनी गौकक्ष्यायणीत्यादि प्राचां ष्फोऽपीष्टः ॥

यूनस्तिः (४. १. ७७ )

युवञ्छब्दात् स्त्रियां तिः स्यात् । स च ताद्धिताख्यः । तद्धितान्तत्वात् स्वाद्युत्पत्तिः । युवतिः ।

अत्र स्त्रीप्रत्यये जाते पुनर्ङीषोऽप्रसङ्गतः ।
स्त्रीपर्यायात् तु युवतेर्ङीषि स्याद् युवतीपदम् ॥

अथ गणाः । तत्राजादिः–'अजैडककोकिलाश्वचटकमूषिकेभ्यः। (स० ३ ४. ३)। एभ्यो जातिङीषि प्राप्ते टाप् : अजा एडका इत्यादि'। 'बालहोडपाकवत्समन्दविलातेभ्यश्च (स० ३. ४. ४) 'कन्यकानिष्ठज्येष्ठमध्यमध्यममुग्धेभ्यः' (स०.३ ४. ११)। एषु वयोङीषि प्राप्ते टाप् । बाला । पाकेत्यादि । ज्येष्ठा प्रौढा । मध्या मध्यमा च युवतिः । शिष्टा बालार्थाः । ज्येष्ठकनिष्ठयोः पुंयोगङीषबाधायेत्यके । पूर्वापहानापरापहानसम्प्रहानेभ्यो नस्य च णः (स० ३. ४.५)। एषां ल्युटा ङीपि प्राप्ते टाब् नस्य णत्वञ्च । पूर्वापहाणा अपरापहाणा । संप्रहाणा । पूर्वानपरांश्च जहातीत्यर्थो माधवोक्तः । 'संभस्त्राजिनपिण्डेभ्यः फलात्' (स०. ३. ४.६) । 'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' (स० ३. ४ ८) 'मूल न्नञः'[1] (स० ३. ४ ९) एषां 'पाककर्ण-' (४. १. ६४) इत्यादिना ङीषप्राप्तिः । संफला ।

१. 'नञ्पूर्वाप' इति मुद्रितसरस्वतीकण्ठाभरणे काशिकादिषु च पाठः.

भस्त्रफलेत्यादि । 'ङ्याप्पोः', (६.३.६३) इति ह्रस्व इति माधवः । एकफलेत्यपि कौमुद्याम् । तथा सत्पुष्पेत्यादि । सद्रच्काण्डेति माधवपाठे प्रत्यक्पुष्पेत्याद्यपि । अ जित्यश्चातिरुक्तः । एत ओषधिजातिविशेषाख्याः । त्रिफलेति समाहारद्विगोर्ङीपि प्राप्ते टाप् । अमहत्पूर्वाच्छूद्राज्जातौ । शूद्रजातिजा शूद्रा । महत्पूर्वात्तु महाशूद्रीत्याभीरी । अजातौ तु शूद्रस्य भार्या शूद्रीति पुंयोगाद् ङीष् । 'क्रुङ्देवविड्भ्याम्' (स० ३. ४. १२) । आभ्यां हलन्ताभ्यामपि टाप् । क्रुञ्चा । देवविशा । 'उष्णिहो वा' (स० ३. ४. १३) । उष्णिक् । उष्णिहा इति 'गौरपिशङ्गहरिणपाण्डरामरसुन्दराविकलनिष्कलपुष्कलेभ्यः' (स० ३. ४. ५३) गौरीत्यादि । हरिणो हरित एव । 'बृहत्सरचोरतापसदासचेटविटभिक्षुकबन्धकपुत्रगायत्रेभ्यः' (स० ३. ४. ५४) बन्धकी कुलटा । 'मत्स्यमनुष्यमुकयहयगवयऋश्यद्रुणक्रोष्टुतक्षश्वानडुद्भ्यः' (स० ३. ४. ५५) । ऋश्यान्तानां जातित्वेऽपि योपधत्वादप्राप्तिः । मुकयोऽपि मृगजातिः । मत्सी । मनुषी । द्रुणी कच्छपी । क्रोष्ट्री । तक्ष्णी । शुनी । अनुडुही । अनड्वाही । 'नटपाटकपाटपेटपटपटलपुटकुटेभ्यः' (स० ३ ४.५७) । नटी । पाटी क्रमः । कपाटी । पेटी । पटी । पटली । पुटी । कुटी । 'धातककेतकबदरकुवललवलामलकमालतवेतसातसाढकेभ्यः' (स० ३. ४. ५८) । धातकी । केतकी । बदरी । कुवलीलवल्यौ वल्यौ । आमलकी । मालती । वेतसी । अतसी । आढकी । 'कदळगुळूचकुम्भकुसुम्भयूथकरीरसल्लकवल्लकेभ्यः' (स० ३. ४. ५९) कदळी । गुळूची । कुम्भी । कुसुम्भी । यूथी । लता । करीरी । सल्लकी । वल्लकी । 'कूश्माण्डहरीतककोशातकशमतमश्रृङ्गबिम्बपिण्डमण्डलस्थालेभ्यः, (स० ३. ४. ६०) । कूश्माण्डी । हरीतकी ।

---

१. 'देविविड्भ्यां', २. 'गौरशबलकल्माषसारङ्गपिशङ्ग', ३. 'बृहन्महत्सरचौरतापस', ४. 'द्रुणोकणक्रोष्टु' ५. 'दोटनाटनटपाटसृपाटमूलाटपेटपटपटलपुटकुटपाण्टसेभ्यः', ६. 'कतकोरशर्करबदर', ७. 'कदरकदलगलूचवाकुचनाचमाचकुम्भकुसुम्भयूथनेथकरीरसल्लकवल्लकेभ्यः', ८. 'पिप्पलहरीतककोशतकशमतमधुषव[illegible]बिम्बबर्बरशष्कुण्डपिण्डमण्डलेभ्यः' इति मुद्रितसरस्वतीकण्ठाभरणपाठः.

कोशातकी । शमी । तमी रात्रिः । तमा चास्ति । शृङ्गी म[1]त्स्यस्त्री । बिम्बी लता । पिण्डी पिण्डम् । मण्डली । स्थली । '[2]यूपसूपशूर्पमठपिठरखारकाकणेभ्यः' (स० ३. ४. ६१) । यूपी । सूपी । शूर्पी । मठी । पिठरी । खारी । काकणी । 'द्रोणबृसासन्दाळिन्[3]ददेहळकन्दळमृणाळशष्कुलशचसूचमञ्जरवैजयन्तेभ्यः' (स० ३. ४. ६२) । द्रोणी । बृसी । आसन्दी । द्वावासनभेदौ । अळिन्दी । देहळी । द्वौ गृहभागौ । कन्दळी । मृणाळी । शष्कुली । शची । सूची । मञ्जरी । वैजयन्ती । 'काकादनगवादनतेजनरजनदोहनशातनपातनसेचनन[4]र्तदनपाटनपेषणास्थानाधिकरणप्रत्यवरोहणाग्रहायणेभ्यः' (सू[5]० ३. ४. ६३) । एषां ल्युटो ङीपि प्राप्ते ङीष् । काकादनीत्यादि । 'एषणात् करणे' (स० ३. ४. ६४) । एषणी । नाराची । अन्यत्रैषणा । 'सुमङ्ग[6]लाच्च संज्ञायाम्' (स० ३. ४. ६५) । सुमङ्गली । 'पीनाच्च' (स० ३. ४. ६६) । पीनी हस्तिनां स्नेहपानप्रकारः । 'रेवद्रोहिणाभ्यां नक्षत्रे' (स० ३. ४. ६७) । रेवती । रोहिणी । 'कटाच्छ्रोण्याम्' (स० ३. ४. ६८) । कटी । पिप्पल्यादयश्चानुक्ताः सर्वेऽत्र द्रष्टव्याः ।

पुरी मृ[7]णाळी नाळी च गौरादिष्विति माधवः ।
मृणाळनाळयेत्युक्त्या नाळा श्रीहर्षसम्मता ॥

गौरादित्वात् बळिशमेव वळिशीति टीकासर्वस्वे । इति । '[8]बहुपद्धतिचण्डाराळकमलकृपाणविकटविशालविशङ्कटध्वजकल्याणोदारपुराणाहन्भ्यः' (स० ३. ४. ७४) । बह्वी । पद्धती । चण्डी । अराळी । कमली । कृपाणी । विकटी । विशाली । विशङ्कटी । ध्वजी । कल्याणी । उदारी । पुराणी । अहन्नन्तस्याल्लोपः । दीर्घाह्नी शरत् । विकल्पाद् बहुपद्धतिः । चण्डा अरालेत्यादि । अह्नस्तु वा ङीष्प्रतिषेधडापौ । दीर्घाहाः । दीर्घाहानौ । दीर्घाहा । दीर्घाह्ने

१. 'त्स्ये' ग. पाठः. २. 'यूपसूपशूर्पसूर्मपमठपठगेदगूदपू(श्वा ? थु)-खारकाकणेभ्यः' ३. 'न्दकन्दलदेहलशष्कुलशचसूचमञ्जरालजवैजयन्तेभ्यः' ४. 'नकार्दनपाटनपषणास्तरणीस्था' इति मुद्रितसरस्वतीकण्ठाभरण पाठः. ५. 'नी' ख. ग. पाठः. ६. 'लात्संज्ञा' मुद्रितपाठः. ७. 'प्रणाळी' केरलवर्मदेवपाठः. ८. 'शोणचण्डारालकमलकृपणविकटविशालविशङ्कटभरजध्वजकल्याणोदारपुराणाहन्भ्यः' मुद्रितपाठः.

'चान्द्रभागादनद्याम्' (म० ३.४.७५)। चान्द्रभागी। चान्द्रभागा। नद्यां तु चान्द्रभागेत्येव। 'शक्तेः शस्त्रे' (स० ३.४.७८) शक्ती। शक्तिः। न क्रोडे[1]गुदखु[2]शफबालभालगळभ[3]गघोणादिभ्यः (स० ३.४.१०२) एभ्यः स्वाङ्गेभ्यो न ङीष्। सुक्रोडा। सुखुरा। आद्युक्तेः किसलयकरा। मृणालभुजेत्यादि। माधवस्त्वाह – क्रोडेति डाबन्तस्य गणे पाठादश्वानामुरोवाचिनः क्रोडाशब्दस्यै[4]व कृतोपसर्जनह्रस्वस्य ङीष्निषेधः। सुक्रोडा बडवेति। भुजान्तरमात्रार्थस्य सुक्रोडी सुक्रोडेति स्वाङ्गाद्विकल्प एव। शार्ङ्गरवादिरप्रसिद्धोऽल्पफलश्चेत्यनुक्तः॥

इति प्रक्रियासर्वस्वे स्त्रीप्रत्ययखण्डः।

न किञ्चिदत्र स्वकपोलकल्पितं
लिखामि शास्त्रे क्वचिदीक्षितं विना।
अनेकधा यत्र पुराविदां मतं
मनोहरं तत्र परं ग्रहीष्यते॥

---

सुबर्थखण्डः।

सुपां[5] प्रकृतिभूतेषु ङ्याप्प्रातिपदिकेष्विह।
उक्तेष्वथ सुपो वक्तुं तदर्थान् ब्रूमहेऽधुना।

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा (२.३.४६)

मात्रशब्दः सर्वत्र योज्यः। प्रातिपदिकार्थमात्रादिषु प्रथमा विभक्तिः स्यात्।

---

१. 'डखरगुद' २. 'भगोखघोण' मुद्रितपाठः ३. 'टा' केरळवर्मदेवपाठः ४. ते॥

बालाय नीलवपुषे नवकिङ्किणीक-
जालाभिरामजघनाय मनोहराय।
भास्वत्तरक्षुनखभूषणभूषिताय
नन्दात्मजाय नवनीतमुषे नमोऽस्तु॥ ५. 'सुपां' इति ग. पाठः.

अव्ययेषु हि लिङ्गादिहीनेषु स्वार्थमात्रके ।
प्रथमासिद्धयेऽत्राद्यमुक्तमुच्चैः शनैर्यथा ॥
कृष्णः श्रीर्ज्ञानमित्यादौ स्वार्थाल्लिङ्गमिहाधिकम् ।
तेन तत्रापि सिद्ध्यर्थं लिङ्गमात्र इतीरितम् ॥
प्रस्थाद्या मानपात्रार्थास्ते तत्परिमिते यदा ।
व्रीह्यादिके प्रवर्तन्ते प्रस्थो व्रीहिरसाविति ॥
तदा परिमितत्वाख्यो धर्मोऽस्ति स्वार्थतोऽधिकः ।
तत्रापि प्रथमासिद्ध्यै परिमाणपदं विदुः ॥
तथाग्निर्विप्र इत्यग्नितुल्यता स्वार्थतोऽधिका ।
तेनार्थान्तरवृत्तीनां प्रथमात्रोपलक्ष्यते ॥
एकद्विबहुशब्देषु त्वेकत्वाद्यर्थवत्स्वपि ।
एकत्वादौ पुनः स्वादिसिद्ध्यर्थं वचनग्रहः ॥
मात्रशब्देन सर्वत्र कर्मत्वाद्याधिक्ये प्रथमा वार्यते ॥

### सम्बोधने च (२. ३. ४७)

आभिमुख्यकरणे च प्रथमा स्यात् । हे कृष्ण ! ॥

### कारके (१. ४. २३)

इतः परं क्रियानिर्वर्तकेषु कारकेषु संज्ञा उच्यन्ते ॥

### कर्तुरीप्सिततमं कर्म (१. ४. ४९)

कर्तुः क्रियया प्राप्तुमिष्टतमं यत् कारकं तत् कर्मसंज्ञम् ॥

### अनभिहिते (२. ३. १)

तिङ्कृत्तद्धितसमासैरनभिहित एव कारके विभक्तय उच्यन्ते ॥

### कर्मणि द्वितीया (२. ३. २)

तिङादिभिरनुक्ते कर्मणि द्वितीया स्यात् ।
त्रिविधं कर्म निर्वर्त्यविकार्यप्राप्यभेदतः ।

कटं करोति तक्ष्णोति वृक्षमादित्यमीक्षते ॥

तिङाद्युक्ते तु कर्मत्वे प्रातिपदिकार्थे प्रथमैव । तिङोक्ते - कृष्णः सेव्यते । कृता-कृष्णः सेवितः । तद्धितेन-पाणिनीयो ग्रन्थः । अत्र ग्रन्थस्य प्रोच्यमानत्वेन कर्मत्वेऽपि तस्यार्थस्य तद्धितोक्तत्वान्न द्वितीया । समासेन-आश्रिता देवा यं स आश्रितदेवः कृष्णः । क्वचिन्निपाताभिहितेऽपि न । कृष्ण इति त्वां जाने ॥

## तथायुक्तं चानीप्सितम् (१. ४. ५०)

ईप्सितवदेव क्रियासंबद्धं चेदनीप्सितमपि कर्माख्यम् । विषं भुङ्क्ते । मार्गे तृणं स्पृशति ॥

## अकथितञ्च (१. ४. ५१)

अपादानादिसंज्ञाकक्षाभिरस्पृष्टं च कारकं कर्माख्यम् ।

दुहियाची रुधिप्रछी चिञ् ब्रूशासी मथिश्च जिः ।
दण्डिर्ग्रहिर्मुषिपची नीवही हरतिः कृषिः ॥

इत्येतेषां मुख्यकर्मसंबद्धं यद्धि कारकम् ।
तस्येह कर्मता प्रोक्ता तेनैते स्युर्द्विकर्मकाः ॥

क्वचिद्धेनूः पयो दोग्धि याचते मातरं घृतम् ।
रुणद्धि वत्सान्गेहं ताः पृच्छति च गोरसम् ॥

वृक्षान् फलानि चिनुते ब्रूते गोपाशिशून् कथाः ।
क्वचिद् बन्धून् हितं शास्ति दधि मथ्नात्यसौ घृतम् ॥

द्यूते घृतं जयत्यन्यान् दण्डयत्यपरान् पयः ।
गृह्णाति वसनं गोपीस्ता मुष्णाति च गोरसम् ॥

क्वचिच्छालीन् पचत्यन्नं पशून्नयति काननम् ।
वनं वहति भोज्यानि फलानि हरते गृहम् ॥

व्रजं कर्षति गोवत्सान् बाललीलापरो हरिः ।
दुहाद्यर्थेष्वपीच्छन्ति प्रसादं प्रार्थये हरिम् ॥

एवं णीञर्थत्वात्प्रहिणोति दूतं पुरीम्। अत्र वल्लवीर्गेहे रुणद्धि। वृक्षेभ्यः फलान्यादत्ते। दध्नि मथनेन घृतं सम्पादयति। अन्येभ्यो घृतं जित्वा गृह्णाति। अपरेभ्यः पयो दण्डनरूपेणाहरति। गोपीभ्यो वसनं गृह्णाति। ताभ्यो गोरसं मुष्णाति। शालीभिरन्नं पचतीत्याद्यर्थाः। अकथितमित्युक्तेश्च विवक्षावशात् कारकान्तरप्राप्तौ तदेव स्यात्। गोभ्यः पयो दोग्धि। गेहे रुणद्धीत्यादि। एषां कस्मिन् कर्मणि लकाराद्युत्पत्त्या प्रथमा स्यादिति चेदुच्यते —

नीहृत्र्वहिकृषां मुख्ये कर्मणि प्रत्यया मताः।
एभ्योऽन्येषां दुहादीनाममुख्ये चेति माधवः॥

नीयन्ते पशवोऽरण्यमिति मुख्ये, परत्र तु।
दुह्यते गौः पयस्तद्वन्मथ्यतेऽमृतमम्बुधिः॥

ब्रूआदीनां तु केषाञ्चिद् विकल्पं च जजल्प सः।
बन्धवो हितमुच्यन्ते बन्धून् वाप्युच्यते हितम्॥

इति।

देशकालाध्वभावाश्च कर्माख्याः स्युरकर्मणाम्।
तदप्यकथितत्वेन न्यासभाष्यादिसाधितम्॥

कूरून् वसति। अत्र 'नद्या अपि देशत्वान्नदीमास्ते इत्यपि' प्रसादे*। कालात्— मासमास्ते। मार्गं स्वपिति। ग्रामं वसति। एष्वधिकरणविवक्षायां सप्तम्यपि। कुरुष्वास्त इत्यादि॥

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ (१. ४. ५२)

गतिज्ञानभक्षणार्थानां शब्दक्रियाणामकर्मकाणामप्यण्यन्तावस्थायां यः कर्ता स ण्यन्तावस्थायां कर्म स्यात्। प्रयोज्यकर्ता कर्मसंज्ञ इत्यर्थः॥

मां मोदं गमयार्थान् मां बोधयाशय मां सुधाम्।
मामध्यापय शास्त्राणि रमयास्मान् जनार्दन॥

---

१. 'धि' क. पाठः, * मुद्रितप्रसादे वाक्यमिदं नोपलभ्यते

शब्दकर्मेत्युक्तेः शब्दरूपस्य कर्मत्व एवेति केचित्। तन्मते धर्मं गादयति मुनिनेत्यादौ न। मतान्तरे मुनिमित्यपि।

लम्भेरयं विधिर्वेति वामनेन प्रदर्शितम्।
मां सुखं लम्भयेत् कृष्णो मया वा लम्भयेत् सुखम्॥

'नीवह्योर्न' नाययति वाहयति वा भारं भृत्येन। फलतो गत्यर्थत्वात् प्राप्तिः। 'नियन्तृकर्तृकस्य वहेरनिषेधः'। वाहयति रथं वाहान् सूतः। 'अत्तिखाद्योर्न'। आदयति खादयति वान्नं द्विजैः। 'भक्षेरहिंसार्थस्य न'। भक्षयत्यन्नं द्विजैः। हिंसार्थस्य 'भक्षयत्यमात्यानरीन् राजे'ति कौमुदी। तत्र हिंसयतीत्येवार्थः। सस्यादेः सचेतनत्वाद् भक्षयति सस्यं गामित्यन्ये। 'अयक्रन्दशब्दायतिह्वेञां ने'ति कौमुदी। आययति सैनिकैररीन्। क्रन्दयति शब्दाययति ह्वाययति वा शूरैः शत्रुम्॥

श्रुदृशोर्णौ द्विकर्मत्वमाह भोजश्च कौमुदी।
मां विष्णुं श्रावयेत्कृष्णो रूपं मां दर्शयेदसौ॥

तारेर्ग्रहेस्तथा मोचेस्त्याजेर्दापेश्च संग्रहः।
इत्युक्तं माधवेनापि भवाब्धिं तारयेत् स माम्॥

ग्राहयेन्मां निजं रूपं रागादीन् मां विमोचयेत्।
मां पापं त्याजयेत् सद्भ्यो धनं मां दापयेद्धरिः॥

'त्यजेर्ने'ति हरः। मया पापं त्याजयेत्॥

## हृक्रोरन्यतरस्याम् (१. ४. ५३)

हृक्रोरणि कर्ता णौ वा कर्माख्यः। हारयति कटं भृत्यान् भृत्यैर्वा। एवं कारयतीत्यपि। 'अभिवादिदृशोर्णावात्मनेपदेषु वेति वाच्यम्'। अभिवादयते गुरुं वटुं वटुना वा। दर्शयते चित्रं प्रियां प्रियया वा।

गत्यर्थानां च तार्यादेः प्रयोज्ये लादयो मताः।
गम्यन्ते पशवो ग्रामं तार्यते पथिको नदीम्॥

बुद्ध्याद्यर्थणिजन्तानां वा भवेत् कर्मणोर्द्वयोः ।
सुतोऽयं बोध्यते धर्मं धर्मो वा बोध्यते सुतम् ॥

इति ॥

### अधिशीङ्स्थासां कर्म (१. ४. ४६)

अधिपूर्वाणां शीङ्स्थासामाधारः कर्माख्यः । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥

### अभिनिविशश्च (१. ४. ४७)

अस्याप्याधारः कर्म । अभिनिविशते सन्मार्गम् । क्वचिन्नेष्टम् । पापेऽभिनिविशते । गाहिरुहिविशामाधारः कर्मेत्येके । प्राप्त्यर्थविवक्षया वा सिद्धिः । यमुनां गाहते । तटमारोहति । व्रजं विशति । रथमास्थित इत्यादौ त्वाक्रम्य स्थित इत्याद्यर्थयोगात् कर्मत्वम् ॥

### उपान्वध्याङ्वसः (१. ४. ४८)

उपादिपूर्वस्य वसेराधारः कर्म । उपवसति, अनुवसति अधिवसति, आवसति वा व्रजं कृष्णः । 'भुक्त्यभावार्थस्य न' । उपवसति वने । एकादशीमुपवसतीत्यन्तसंयोगे स्यात् । 'क्रियाविशेषणानां कर्मता वाच्या' । मन्दं चरति । मन्दं चरणं करोतीत्यर्थः । 'तसन्तयोरुभसर्वयोर्योगे द्वितीयेष्टा' । उभयतः कृष्णं गोप्यो । सर्वतः कृष्णं बालाः । 'धिग्योगे च' । धिक् कंसम् ।

### उपर्यध्यधसः सामीप्ये (८. १. ७.)

एते सामीप्ययुक्ते स्वार्थे द्विरुच्यन्ते । आम्रेडितान्तेषूपर्यादिषु सत्सु द्वितीयेष्टा ।

उपर्युपरि सौधाग्रं समराङ्कणमध्याधि ।
अधोऽधो मेघवीर्थीं च ददृशे सौभमुद्भ्रमत् ॥

अभितःपरितःसमयानिकषाहाप्रतियोगेषु च दृश्यते ।

अभितः केशवं गोपा गावस्तं परितः स्थिताः ।
समया तं स्थिता राधा निकषा तां सखीजनाः ॥

हा कृष्णमिति शोचामि कृष्णो मां प्रति भासताम् ।
प्रतौ क्वचिन्नेति रामो बालोऽयं प्रतिभाति मे ॥

तरुणीस्त्रिशतं यावदित्याद्यवधिवाचिनः ।
यावतोऽप्यन्वये दृष्टं तच्च सिद्धं दृशिग्रहात् ॥

[1]धिग्योगे प्रथमा दृश्यत इति शृङ्गारे । हा पुत्रकः । धिक् प्रमादः । क्वचिद् गम्यमानापि क्रिया कारकत्वनिमित्तमिति हराद्युक्तेः धिगहं जन्म नारीणामित्यादिसिद्धिः ।

तत्राहं धिक्करोमीति क्रियार्थो हि गम्यते ।
उक्तन्यायश्च भूयिष्ठवक्तव्यादिविभङ्गकृत् ॥

## अन्तरान्तरेण युक्ते (२ ३. ४)

आभ्यां योगे द्वितीया स्यात् । द्वावपि मध्ये इत्यर्थे विनार्थे च स्वरादिसूत्रे उक्तौ ।

अन्तरा वान्तरेणासौ क्ष्मां रमां च स्थितो हरिः ।
नान्तरा माधवं मुक्तिर्नान्तरेण हरिं सुखम् ॥
येन तेनेति योगेऽपि द्वितीयामाह भोजराट् ।
गिरिं तेन हरेः क्रीडा नदीं येन कदाचन ॥
ताविह देश इत्यर्थौ लक्षणार्थेऽव्यये इमे ॥

## कालाध्वनोरत्यन्तसंयोगे (२. ३. ५.)

गुणक्रियाद्रव्यैः कालाध्वनोः साकल्येन योगे द्योत्ये द्वितीया स्यात् । मासमातुरः । मासमधीते । मासमपूपाः । क्रोशं कुटिला नदी । क्रोशं गायति । क्रोशं तरवः ।

---

१. 'मापि दृ' केरलधर्मदेवपाठः,

कर्मप्रवचनीयाः (१. ४. ८३)

इतः परमुच्यमाना एतदाख्याः ॥

अनुर्लक्षणे (१. ४. ८४)

लक्षणे द्योत्येऽनुः कर्मप्रवचनीयः स्यात् । गत्युपसर्गसंज्ञापवादोऽयम् ॥

कर्मप्रवचनीययुक्ते द्वितीया (२. ३. ८)

वेणुरवमनु प्राधावद् राधा ॥

तृतीयार्थे (१. ४. ८५)

अस्मिन् द्योत्येऽनुरुक्तसंज्ञः । कृष्णमनु क्रीडति राधा । तेन सहेत्यर्थः । सहार्थ इत्येव भोजः ॥

हीने (१. ४ ८६.)

हीनत्वे द्योत्येऽनुरुक्ताख्यः । हरिमनु सुराः । तस्मान्न्यूना इत्यर्थः ॥

उपोऽधिके च (१. ४. ८७)

अयमाधिके हीने चोक्ताख्यः । अधिके सप्तमी वक्ष्यते । हीने तु हरिमुप सुराः ॥

लक्षणेत्थंभूताख्यानभगवीप्सासु प्रतिपर्यनवः (१. ४. १०)

एष्वर्थेषु प्रातिपर्यनव उक्ताख्याः ।
व्रजं प्रति गतोऽक्रूरः केशवं प्रति भक्तिमान् ।
कंसं प्रति धनं दातुं गोपं गोपं प्रति ब्रुवन् ॥

केशवं प्रति भक्तिमानितीत्थंभूतोऽयमित्याख्यानमेतत् । कंसं प्रतीति कंसस्य भागभूतं धनमित्यर्थः । एवं पर्यनू योज्यौ । पूर्वन्तु हेतुभूते लक्षणेऽनोः कर्मप्रवचनीयत्वमुक्तमिति भेदः ॥

## अभिरभागे (१. ४. ९१.)

भागवर्जितेषु लक्षणाद्यर्थेष्वभिरुक्ताख्यः । व्रजमभि गतः । हरिमभि भक्तिमान् । गोपं गोपमभि व्रते ॥

## अतिरतिक्रमणे च (१. ४. ९५)

अतिक्रमणे पूजायां चातिरुक्ताख्यः । अति देवान् कृष्ण इति कौमुदीभट्टयादौ । अतिक्रमोऽतिवेलत्वमिति वृत्तिः । तत्र द्वितीया न । अति स्तौति । पूजायामपि द्वितीया न । शोभनं स्तौति अति स्तौति । अनयोः कर्मप्रवचनीयत्वेनोपसर्गत्वबाधात् स्तौतेः षत्वाभावः फलम् । अधिपरिस्वपीनां योगेऽपि द्वितीया न । तेषामपि गत्युपसर्गत्वबाधार्थं संज्ञोक्तिः ॥

## अधिपरी अनर्थकौ (१. ४. ९३)

अर्थविशेषस्यावाचकात्वधिपरी कर्मप्रवचनीयौ । कुतोऽधि त्वमागच्छसि । कस्मिन् परि त्वं वससि । अनुपसर्गत्वाद् धातोः पृथक् प्रयोगः ॥

## सुः पूजायां (१. ४ ९४)

सु स्तौति । प्राग्वत् षत्वाभावः ॥

## अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु (१. ३ ९६)

एष्वर्थेष्वपिरुक्ताख्यः । अप्रयुज्यमानस्य पदान्तरस्यार्थः पदार्थः । सर्पिषोऽपि मे देहि । सर्पिषोऽल्पांशमित्यर्थः । रिपोः कथापि नेष्टेत्यादौ राज्यसैन्यादिरपेरर्थ इति शङ्करः । शक्तेरप्रातिघातोक्तिः सम्भावनम् । अपि स्तुयान्महाविष्णुम् । कामचारानुज्ञा अन्ववसर्गः । अपि स्तौतु भवान् । गर्हायां शूद्रमपि स्तौत्ययम् । समुच्चये-कृष्णो रामोऽपि स्तुत्यः ॥

## विभाषा कृञि (१. ४. ९८)

कृञ्योग ईश्वरार्थेऽधिर्वा कर्मप्रवचनीयः स्यात् । मामाधि कृत्वा गतः । मामाधिकृत्य गतः । अधिपतिं कृत्वेत्यर्थः । कर्मप्रवचनीयत्वा-

भावपक्षे गतित्वात्समासे ल्यप् स्यादिति भेदः । द्वितीया तूभयत्र कृञ्कर्मतया स्यादिति ॥

स्वतन्त्रः कर्ता (१. ४. ५४)

क्रियायां स्वातन्त्र्येण विवक्षितः कर्ता स्यात् ॥

साधकतमं करणम् (१. ४. ४२)

क्रियासिद्धावत्युपकारकं करणं स्यात् ॥

कर्तृकरणयोस्तृतीया (२. ३. १८)

तिङाद्यनुक्ते कर्तरि करणे च तृतीया स्यात् । कृष्णेन चक्रेण हतश्चैद्यः । तिङाद्युक्ते तु कृष्णो हन्तीति कर्तरि प्रथमैव । जीवनं जलमित्यत्र करणस्य कृतोक्तत्वात्प्रथमा । 'प्रकृत्यादिभ्यस्तृतीया वाच्या' । अत्र भोजः । 'प्रकृतिप्रायगोत्रनामजातिजनुःपुमांत्मादिभ्यः'[1] (स० ३-२-२१६) । एभ्यः संबन्धमात्रे षष्ठी प्राप्ता ।

प्रकृत्या कोमलः प्रायेणोग्रो गोत्रेण यादवः ।
नाम्नासौ केशवो जात्या क्षत्रियो जनुषाद्भुतः ॥

पुंसानुजश्चात्मनार्द्रः प्रथमार्थस्त्विहात्मनः ।
आद्युक्तेर्जन्मनारभ्य स्वेन विश्वोत्तरो हरिः ॥

'न्यक्षकार्त्स्न्यादिभ्यः क्रियाविशेषणे'(स०३·१ २१७) । न्यक्षेण करोति । कार्त्स्न्येन पठति । आद्युक्तेः साकल्येनात्ति । भूयसा दुःखयन्ति । 'सुखदुःखादिभ्यो वा'(स०३.१ २१८)क्रियाविशेषण इत्येव । सुखेनास्ते, सुखमास्ते । आद्युक्तेः कृच्छ्रेणास्ते । कृच्छ्रम् जीवति । 'समविषमादिभ्योऽधिकरणे'(स० १·३·२१९)। समेन विषमेण वा धावति । वेत्येव । समे विषमे । 'द्विद्रोणपञ्चकादिभ्यः कर्मणि वीप्सायाम्' (स० ३-१-२१७) द्विद्रोणं द्विद्रोणं ददाति । द्विद्रोणेन ददाति । एवं पञ्चकं पञ्चकमित्यर्थे पञ्चकेन पणान् ददाति इति ॥

---

१· 'पुमात्मादिभ्यो गम्यमानाक्रियायाम्' इति मुद्रितपाठः.

दिवः कर्म च ( १. ४. ४३ )

दीव्यतेः साधकतमं कर्माख्यं करणाख्यं च स्यात् । गोपीं दीव्यति । गोप्या दीव्यति । तया क्रीडतीत्यर्थः ॥

अपवर्गे तृतीया ( २. ३. ६ )

क्रियासमाप्तौ द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना वाचितो ग्रन्थः । क्रोशेन पठितः श्लोकः । असमाप्तौ तु द्वितीयैव । दिवसं वाचितो न च समाप्तः ॥

सहयुक्तेऽप्रधाने ( २ ३. १९ )

सहार्थेन योगे सत्यप्रधाने तृतीया स्यात् । गोपैः सह गतः कृष्णः । एवं सार्धं साकमित्यादि । सहार्थानामप्रयोगेऽपि । गोपैर्वनं गतः कृष्णः ॥

येनाङ्गविकारः ( २. ३. २० )

येनाङ्गेन विकृतेनाङ्गिनो विकारस्ततस्तृतीया स्यात् । अक्ष्णा काणः । पदा खञ्जः । ह्रानिवदाधिक्यमप्यङ्गानां विकार इति वाम-नोक्त्या मुखेन त्रिलोचन इत्याद्यपि । मुखेन भीमा राक्षसीति विका-रमात्रेऽप्याह भट्टिः ॥

इत्थंभूतलक्षणे ( २. ३. २१ )

एवंभूतोऽयमिति ज्ञातुं चिह्नभूतेऽर्थे तृतीया स्यात् । पुस्तके-नायं विद्वान् याति । तेन चिह्नेन विद्वानिति स्फुटोऽयं यातीत्यर्थः ॥

संज्ञोऽन्यतरस्यां कर्मणि ( २. ३. २२ )

संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । बन्धुना बन्धुं वा संजानीते । अत्र प्रत्यभिज्ञार्थ इति भट्टिः । धनेन धनं वा सञ्जा-नीते । अपेक्षत इत्यर्थ इति नाथः ॥

परस्मैपादिनः संज्ञः स्मरणार्थस्य षष्ठ्यपि ।
कृष्णस्य कृष्णं कृष्णेन सञ्जानाति व्रजाङ्गना ॥

हेतौ (२. ३. २३)

हेत्वर्थे तृतीया स्यात् । पुण्येन हरिभक्तिः । वारणार्थयोगे तृतीया वाच्या । अलं विळम्बेन । 'पूर्वावरोनार्थादियोगेऽपीष्यते'। मासेन पूर्वः । मासेनावरः । दोपेण हीनः । तर्केण कलहः । गुडेन मिश्रः । 'अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया वाच्या' । दास्या सम्प्रयच्छते कामी । तस्यै ददातीत्यर्थः ॥

कर्मणा यमभिप्रैति स सम्प्रदानम् (१. ४. ३२)

येनकेनचित् कर्मणा कर्ता यमर्थमभ्येति स सम्प्रदानं स्यात् ।

चतुर्थी सम्प्रदाने (२. ३. १३)

शत्रवे प्रहरत्यस्त्रं ब्राह्मणाय ददाति गाम् ।
दानस्य कर्मणैवेति केचिद् भाष्यमतं न तत् ॥

क्रिययापीति वक्तव्यमुक्तं वा सूत्र एव तत् ।
सन्नह्यति मृधायासौ पत्ये शेते नितम्बिनी ॥

अनभिहित इत्येव । दानीयो विप्रः ॥

रुच्यर्थानां प्रीयमाणः (१. ४. ३३)

रुच्यर्थधातूनां योगे प्रीयमाणः सम्प्रदानाख्यः । हरये रोचते स्वदते वा पयः । अत्र पयसा हरेः प्रीयमाणत्वम् ॥

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः (१. ४. ३४)

श्लाघादेर्योगे ज्ञापयितुमिष्यमाणः सम्प्रदानम् ।

कृष्णाय श्लाघते गोपी तस्मै चापह्नुते क्वचित् ।
तिष्ठते सस्मिता तस्मै शपते शप्यतीति वा ॥

तत्राद्ये कृष्णं बोधयितुं तद्गुणं स्वगुणं वा श्लाघत इत्यर्थः। अपह्नुत इति त्वदर्थं मयैवमुक्तमिति कृष्णं ज्ञापयन्ती कृष्णोऽत्र नास्तीत्यन्यान् प्रत्यपदिशतीत्यर्थः। तस्मै स्वामाकुलतां बोधयितुं स्वगात्रमन्यद्वा किञ्चिन्निगूहयतीत्यन्ये। निगूह्यमानस्याभावोऽत्र ज्ञाप्यत इति शङ्करः। तस्मै स्वागांसि निह्नुते निरागस्तां तस्मै ज्ञापयितुमित्यर्थः॥

धारेरुत्तमर्णः ( १. ४. ३५ )

धारयतेः प्रयोगे ऋणदाता सम्प्रदानम्। वणिजे शतं धारयति॥

स्पृहेरीप्सितः ( १.४.३६ )

हरये स्पृहयति। वेति भोजः। हरिं स्पृहयति॥

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( १. ४. ३७ )

एषां प्रयोगे कोपविषयः सम्प्रदानम्।

हरये क्रुध्यति चैद्यो द्रुह्यति चेर्ष्यत्यसूयति द्वेषात्।
पूजाद्यसहनमीर्ष्या गुणेषु दोषप्रकल्पनासूया॥

अकोपविषयत्वे तु न स्यादीर्ष्यति वल्लभाम्।
तां परैर्दृश्यमानां न क्षमते कामतो हि तत्॥

क्रुधद्रुहोरुपसृष्टयोः कर्म (१. ४. ३८)

सोपसर्गयोरनयोः कोपविषयः कर्मैव। कृष्णमभिक्रुध्यत्यभिद्रुह्यति च कंसः।

राधीक्ष्योर्यस्य विप्रश्नः ( १. ४. ३९)

दैवज्ञचिन्तनार्थयोरनयोः प्रयोगे यद्विषयः प्रश्नः स सम्प्रदानम्। कृष्णाय राध्यतीक्षते वा गर्गः। तस्य शुभाशुभं पर्यालोचयतीत्यर्थः॥

---

१. 'तां निबो' क. पाठः. २. 'यः स' क. पाठः.

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (१. ४. ४०)

आभ्यां परस्य शृणोतेर्योगे पूर्वव्यापारस्य कर्तोक्तसंज्ञः। मुनिभ्यो रक्षोवधं प्रतिशृणोति आशृणोति वा रामः। तैः प्रार्थितः प्रतिजानीत इत्यर्थः। प्रार्थनमिह पूर्वक्रिया॥

## अनुप्रतिगृणश्च (१. ४. ४१)

अनुप्रतिपूर्वस्य गृणातेर्योगे पूर्वस्य कर्तोक्ताख्यः। होत्रेऽनुगृणाति प्रतिगृणाति वाध्वर्युः। होतुर्ऋक्छंसनमत्र पूर्वक्रिया। तदवाधिष्वध्वर्योर्मन्त्रोक्तिर्गृणात्यर्थः। कवयेऽनुगृणाति प्रतिगृणाति वा नृप इति भट्टिमतम्। पूर्वं स्तुतवन्तं कविं नृपः प्रशंसतीत्यर्थः॥

## परिक्रयणे सम्प्रदानमन्यतरस्याम् (१. ४. ४४)

कालव्यवस्थया भृत्यादिस्वीकारः परिक्रयः। तत्र करणं वा सम्प्रदानाख्यम्। शतेन शताय वा परिक्रीतः। 'तादर्थ्ये चतुर्थी वाच्या'। श्रेयसे हरिं भजति। 'क्लृप्यर्थप्रयोगे विकारे चतुर्थी वाच्या'। घटाय कल्पते मृत्। सम्पद्यते जायते वा। 'उत्पातेन ज्ञापिते च'। वाताय कपिला विद्युदित्यादि॥

## क्रियार्थोपपदस्य[1] कर्मणि स्थानिनः (२. ३. १४)

क्रियार्थोपपद इति तुमुन्नन्त उक्तः। स्थानीत्यप्रयुज्यमानः। अप्रयुज्यमानस्य तुमुन्नन्तस्य कर्मणि चतुर्थी स्यात्। फलेभ्यो याति। फलान्याहर्तुमित्यर्थः॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च (२. ३. १६)

एभिर्योगे चतुर्थी स्यात्। कृष्णाय नम इत्यादि। अलमित्यर्थग्रहः। तेन दैत्येभ्यो हरिरलमितिवत् समर्थः शक्तः प्रभवतीत्याद्यपि। नमस्करोति देवानित्यत्र तु 'उपपदविभक्तेः कारकविभक्तिर्बली

---

१ 'पदस्य' चेति सर्वत्र सूत्रे पठ्यते।

यसी' ति न्यायात् करोत्यपेक्षया कर्मविभक्तिः। कृष्णाय नमतीत्यादौ तु क्रियया यमभिप्रैतीति सम्प्रदानता ॥

मन्यकर्मण्यनादरे विभाषाप्राणिषु ( २. ३. १७ )

अनादरे द्योत्ये प्राणिवर्जिते मन्यतेः कर्मणि चतुर्थी वा स्यात्। कर्मण उपमानत्व एवेत्यापिशलिभोजौ । तृणाय तृणं वा मन्यते रिपुम्। प्राणिषु काकशुकसृगालेभ्य एव निषेधः। त्वां काकं मन्य इत्यादि। अन्यत्र तु स्यादेव। त्वां शुने मन्ये श्वानं[3] वा।

अप्राणिष्वप्यन्ननौभ्यां चतुर्थी नैव जायते।

अन्नं मन्ये दुर्बलं त्वां नावं मन्ये पेररितम् ॥

वार्त्तिकेऽनुपमानेऽपि चतुर्थ्युक्ता प्रकुत्सने।

न त्वां तृणाय मन्ये यत् तृणं गोभिर्न भुज्यसे ॥

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ( २. ३. १२ )

अध्ववर्जिते गत्यर्थकर्मणि चेष्टायां सत्यामेते स्तः। व्रजं व्रजाय वा व्रजति कृष्णः। चेष्टायामित्युक्तेः स्पन्दनाभावे न । मनसा व्रजं व्रजति। अध्वनि तु-मार्गं याति। आस्थितेऽध्वन्येव प्रतिषेधः। उन्मार्गगतो मार्गाय याति ॥

ध्रुवमपायेऽपादानम् ( १. ४. २४ )

कस्यचिदपगमे सति यत् पूर्वस्मादविशेषं तदपादानसंज्ञम् ॥

अपादाने पञ्चमी (२. ३. २८ )

ग्रामादागच्छति। धावतोऽश्वात्पतति । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्'। पापाज्जुगुप्सते। पापाद् विरमति, निवर्तते वा। धर्मात् प्रमाद्यति स्खलति वा ॥

---

१. 'दौ क्रि' क. पाठः. २. 'क्षेपे यो' केरळवर्मदेवपाठः. ३. 'नं मन्ये अ' क. ख. पाठः.

भीत्रार्थानां भयहेतुः ( १. ४. २५ )

भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानम् । दैत्याद् बिभेति । दैत्याद् रक्षति ।

पराजेरसोढः ( १. ४. २६ )

अस्य प्रयोगे यन्न सह्यते तदपादानम् । अध्ययनात् पराजयते । तदशक्त्या तत्र न्यूनीभवतीत्यर्थः ।

वारणार्थानामीप्सितः (१. ४. २७)

तेषां[1] प्रयोगे ईप्सितोऽर्थोऽपादानम्[2] । सस्याद् वारयति गाम् । सस्यविषया गोः प्रवृत्तिरिति तस्येप्सितत्वम् । तेन कूपादन्धं रुन्ध इत्याद्यपि ॥

अन्तर्धौ येनादर्शनमिच्छति ( १. ४. २८ )

तिरोधाने सति यत्कर्तृकमदर्शनमिष्यते सोऽपादानम् । मातुर्निलीयते कृष्णः ।

आख्यातोपयोगे ( १ ४ २९ )

सनियमकं विद्याग्रहणमुपयोगः । तत्रोपदेष्टापादानम् । द्विजादधीते । सनियमत्वाभावे तु षष्ठ्येव । नटस्य श्रुत्वा पठति ॥

जनिकर्तुः प्रकृतिः (१. ४. ३०)

जायमानस्य कारणमपादानम् । समुद्राद्रमा जाता ।

भुवः प्रभवः (१. ४. ३१)

भूकर्तुः प्रभवस्थानमपादानम् । हिमवतो गङ्गा प्रभवति । आदौ दृश्यत इत्यर्थः । 'ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वाच्या'। सौधात् प्रेक्षते । आसनात् प्रेक्षते । सौधमारुह्यासन उपविश्येत्यर्थः ।

---

१. 'एषां' केरळवर्मदेवपाठः. २. 'ता' क. पाठः.

यद्वालम्ब्याध्वकालौ तु मीयेते तस्य पञ्चमी ।
अध्वनः प्रथमा सप्तमी वा कालात्तु सप्तमी ॥
नगराद्योजनं ग्रामो योजने वेति तद्द्विधा ।
चैत्रीदिनात् तु वैशाखी मासे स्यादिति चापरम् ॥

कुतो भवानित्यादौ त्वागताद्यर्थयोगात् पञ्चमी ।

अन्यारादितरर्ते दिक्छब्दाञ्चूत्तरपदाजाहियुक्ते (२. ३. २९)

एभिर्योगे पञ्चमी स्यात् । अन्येत्यर्थग्रहः । अन्यः कृष्णात् । भिन्नः कृष्णात् । आराद्वनात् । इतरो विपरीतः । इतरो धर्मात् । ऋते कृष्णात् । 'ऋते द्वितीया च' (स० ३. १. २४५) इति भोजः । ऋते कृष्णम् । दिक्छब्दे तु - पूर्वो ग्रामात् तस्मात् पूर्वः कालः । अञ्चूत्तर-पदाः प्रागादयः । तेषां दिक्छब्दत्वेऽपि । 'अञ्चेर्लुक्' (५. ३. ३०) इत्यतसुजर्थयोगात् वक्ष्यमाणषष्ठीबाधायोक्तिः । प्राग् ग्रामात् । आच - दक्षिणा ग्रामात् । आहि दक्षिणाहि ग्रामात् । 'आरभ्यार्थ-योगेऽपी'ति मुग्धबोधे । दर्शनादारभ्य । दर्शनात् प्रभृति ॥

अपपरी वर्जने (१. ४. ८८)

एते वर्जनेऽर्थे कर्मप्रवचनीयौ ।

आङ्मर्यादावचने (१. ४. ८९)

मर्यादायामाङुक्तसंज्ञः । 'अभिविधौ चेष्टम्' ॥

पञ्चम्यपाङ्परिभिः (२. ३. १०)

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अप ग्रामात् सेना स्थिता । परि ग्रामात् । आ समुद्रात् क्षितिः । आ कोलेभ्यः केरळाः ॥

अकर्तर्यृणे पञ्चमी (२. ३. २४)

हेतुभूतादृणादकर्तृत्वेन विवक्षितात् पञ्चमी । शताद्बद्धः । कर्तृत्वे शतेन बन्धितः ॥

## विभाषा गुणेऽस्त्रियाम् (२. ३. २५)

अस्त्रीलिङ्गे गुणे हेतुभूते पञ्चमी वा स्यात् । विकल्पात् तृतीया । पटुत्वात् पटुत्वेन वा सुखितः । अगुणात् तु तृतीयैव । धनेन सुखितः । स्त्रियामपि न । बुध्या सुखितः । 'उपलब्ध्यादेस्तु पञ्चम्यपीष्टा' । उपलब्धेः उपपत्तेः । धूमादग्निज्ञानमित्यादावगुणादपीष्टा ॥

## पृथग्विनानानाभिस्तृतीयान्यतरस्याम् (२. ३. ३२)

अत्रान्यतरस्यामिति समुच्चये ।

एभिर्योगे तृतीया च द्वितीयापि च पञ्चमी ।
न कृष्णेन पृथक् कृष्णं पृथक् कृष्णात् पृथग्जगत् ॥

किं कृष्णेन विना कृष्णं विना कृष्णाद्विना सुखम् ।
कृष्णेन नाना कृष्णं वा कृष्णाद् वा नास्ति किञ्चन ॥

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य (२. ३. ३३)

अद्रव्यार्थेभ्य एभ्यः करणे पञ्चमीतृतीये स्तः । स्तोकाद्धतः स्तोकेन हतः इत्यादि । स्तोकाल्पकतिपयास्तुल्यार्थाः । द्रव्यपरत्वे तु स्तोकेन विषेण हतः ॥

## दूरान्तिकार्थेभ्यो द्वितीया च (२. ३. ३५)

एभ्योऽद्रव्यार्थेभ्यः सर्वविभक्त्यर्थे द्वितीयापञ्चमीतृतीयाः स्युः । 'सप्तम्यधिकरणे च' (२. ३. ३६) इत्युत्तरसूत्रे चकारात् सप्तम्यपि ॥

दूरं दूराच्च दूरेण दूरे दुःखाय जायते ।
अन्तिकं वान्तिकाच्छौरेरन्तिकेनान्तिके मुदे ॥

एवं प्रथमार्थे । तथा द्वितीयाद्यर्थेऽप्यूह्यम् । पर्यायेभ्योऽप्येवम् द्रव्यपरत्वे तु-दूराय गृहाय याति ॥

षष्ठी शेषे (२. ३. ५०)

यत्रान्यविभक्तिर्नोक्ता तत्र सम्बन्धमात्रे षष्ठी स्यात् ।
यद्वा शेषोऽप्रधानं स्यात् तेन सम्बन्धिनोर्द्वयोः ।
विशेषणे हि षष्ठी स्यादन्यथा तु द्वयोर्भवेत् ॥

राज्ञः पुरुषः । न माषाणामश्नीयादिति भाष्योक्तेर्भुक्त्यर्थानां कर्मणि षष्ठी ज्ञापिता । अत एव ज्ञापनादन्यत्रापि[1] कर्मादौ सम्बन्धमात्रविवक्षायां षष्ठीत्यन्ये । कृष्णस्य भजति । अक्षाणां दीव्यति । विप्रस्य ददातीत्यादि ।

षष्ठी हेतुप्रयोगे (२. ३. २६)

हेत्वर्थे तृतीयापञ्चम्यावुक्ते । तत्र हेतुशब्दप्रयोगे तु षष्ठी स्यात् । अन्नस्य हेतोर्याति ।

सर्वनाम्नस्तृतीया च (२. ३. २७)

सर्वनाम्नो हेतुप्रयोगे षष्ठी तृतीया च स्यात् । कस्य हेतोः । केन हेतुना ।

हेत्वर्थयोगे शब्दानां स्युस्तृतीयादयोऽखिलाः ।
सर्वनाम्नस्तु सर्वाः स्युरिति कैयटमाधवौ ॥

धनेन हेतुना, धनाय हेतवे, धनाद्धेतोः, धनस्य हेतोः, धने हेतौ वसति[2] । एवं निमित्तकारणप्रयोजनेषु । प्रयोजनस्यापि प्रवृत्तिहेतुत्वादुक्तिः । सर्वनाम्नस्तु-को हेतुर्वसति, कं हेतुं वससि, केन हेतुनेत्यादि प्राग्वत् । एषमन्यो हेतुर्वसामि । उभौ हेतू वसामि इत्यादि ॥

षष्ठ्यतसर्थप्रत्ययेन (२. ३. ३०)

अतसुजर्थैर्योगे षष्ठी स्यात् । दक्षिणतो ग्रामस्य पुरस्तात् पश्चाद् वा ग्रामस्य । 'ततः पश्चा'दिति भाष्यप्रयोगात् पञ्चम्यपि । अतः परस्तात् ॥

---

१. 'छ्यपि ज्ञा' क. पाठः. २. 'तोर्वसति' केरळवर्मदेवपाठः.

## एनपा द्वितीया (२.३.३१)

एनपा योगे द्वितीया षष्ठी च स्यात् । दक्षिणेन ग्रामं, ग्रामस्य वा । 'स्त्र्यधिकारात् परेणे'त्यादि चिन्त्यमिति हरः ॥

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् (२.३.३४)

एतैर्योगे षष्ठी स्यात् । समुच्चयात् पञ्चमी च । पूर्वं तेषामेवोक्तम् । इदानीं तैर्युक्तस्योच्यत इति भेदः । ग्रामस्य ग्रामाद्वा दूरे । ग्रामस्य ग्रामाद् वान्तिके । एवं विप्रकृष्टनिकटादियोगेऽपि । बहिर्योगेऽप्युभयमाह भोजः । गृहस्य गृहाद् वा बहिः ॥

## ज्ञोऽविदर्थस्य करणे (२.३.५१)

अज्ञानार्थस्य जानातेः षष्ठी तु करणे भवेत् ।
भवाञ्छस्त्रस्य जानीतां तेन व्याप्रियतामिति ॥
मिथ्याज्ञानार्थको वायं तस्या जानाति सोऽखिलम् ।
भ्रान्त्या सर्वं तया वेत्ति तद्रूपेणेति सिध्यति ॥

करणत्वं कथञ्चिद्योज्यम् । ज्ञानार्थस्य पुत्रं जानाति स्वरेणेति तृतीयैव ॥

## अधीगर्थदयेशां कर्मणि[1] (२.३.५२)

स्मरणार्था अधीगर्थाः केशवस्य स्मराम्यहम् ।
उत्कण्ठापि स्मृतेर्भेदः कृष्णस्योत्कण्ठते मनः ॥
भट्टिर्विस्मरतेश्चाह शस्त्राणां व्यस्मरन् भटाः ।
दयिर्दानगतित्राणहिंसादानकृपार्थकः ॥
इष्टस्य दयते कृष्णो गत्याद्यर्थेषु चोह्यताम् ।
ईशेर्नियमनार्थत्वात् कर्मेष्टे जगतां हरिः ॥

## कृञः प्रतियत्ने (२.३.५३)

गुणाधानार्थस्य कृञः कर्मणि षष्ठी स्यात् । कुसुमैः केशस्योपस्कुरुते । आगमनस्योपस्कुरुत इति यत्नमात्रेऽप्याह भट्टिः ॥

---

1. णि अधीगर्थाः स्मृत्यर्थाः स्मर के. ग. पाठः.

## रुजार्थानां भाववचनानामज्वरेः (२. ३. ५४)

भावकर्तृकाणां रुजार्थधातूनां कर्मणि षष्ठी स्याद्, ज्वरेस्तु न। देहस्य रुजति रोगः। रिपो रुजति विक्रमः। अत्र रोगविक्रमादिर्भाव[1] एव कर्ता। अन्यत्र न। नरं रुजति श्लेष्मा। 'अज्वरिसन्ताप्यो'रिति वाच्यम्। देहं ज्वरयति सन्तापयति वा रोगः। शृङ्गारे तु रोगादिपदप्रयोगं विनैव भावकर्तृकत्वमुक्तम्।

द्विषां रुजत्यर्दयते तुदतीत्याद्युदाहृतिः।
तेषां रुजादिर्भवतीत्येवं भावस्य कर्तृता॥

यथा कर्माविवक्षायामकर्मत्वं सकर्मणाम्।
तथा कर्त्रविवक्षायां क्रिया कर्त्री भवेदिह॥

## आशिषि नाथः (२. ३. ५५)

आशीरर्थस्य नाथतेः कर्मणि षष्ठी। श्रियो नाथते। श्रीर्भूयादित्याशास्त इत्यर्थः। अन्यत्र हरिं नाथति। याचतीत्यर्थः॥

## जासिनिप्रहणनाटक्राथपिषां हिंसायाम् (२. ३. ५६)

हिंसार्थानामेषां कर्मणि षष्ठी।

कंसस्योज्जासयत्येष निप्रघ्नन् मल्लसंसदाम्।
अत्र निघ्नन्नपि प्रघ्नन प्रणिघ्नन्नपि चेष्यते॥

द्विषामुन्नाटयत्येष क्राथयत्यमरद्रुहाम्।
पिनष्टि चासौ दुष्टानां क्ष्मां निहन्तीत्यहिंसने॥

## व्यवहृपणोः समर्थयोः (२. ३. ५७)

द्यूते वाणिज्ये च समानार्थयोरनयोः कर्मणि षष्ठी। शतस्य व्यवहरते द्यूते वाणिज्ये वा। शतं विनियुङ्क्ते इत्यर्थः। एवं शतस्य

---

१ 'दिर्भिर्भा' ख. ग. पाठः.

पणते । आभ्यामन्यत्र पणान् व्यवहरति । गणयतीत्यर्थः । कृष्णं पणायति । स्तौतीत्यर्थः ॥

दिवस्तदर्थस्य (२. ३. ५८)

उक्तार्थयोर्दिवः कर्मणि नित्यं षष्ठी । शतस्य दीव्यति ॥

विभाषोपसर्गे (२. ३. ५९)

शतस्य शतं वा प्रदीव्यति ॥

कृत्वोऽर्थप्रयोगे कालेऽधिकरणे (२. ३. ६४)

कृत्वसुजर्थानां प्रयोगे कालवाचिन्यधिकरणे षष्ठी स्यात् । दिनस्य शतकृत्वः त्रिर्वा हरिं नमति ।

ज्ञादीनां करणादौ हि शेषत्वेन विवक्षिते ।
षष्ठ्युक्ता स्वविवक्षायां तृतीयाद्येव जायते ॥

ततः शस्त्रेण जानीते हरिं स्मृत्वा निहन्त्यघम् ।
इत्यादि दीव्यतिं मुक्त्वा सर्वेषु स्याद् यथोचितम् ॥

एषु तु शेषविवक्षा प्रचुरेत्याख्यातुमेव सूत्राणि ।
प्रतिपदविधानषष्ठ्या असमासज्ञापनार्थमिति चाहुः ॥

इति ॥

कर्तृकर्मणोः कृति (२. ३. ६५)

कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य क्रीडनमिति कर्तरि । कृष्णस्य वन्दनमिति कर्मणि ।

द्विकर्मणां कर्मयुग्मे षष्ठी स्यान्मुख्य एव वा ।
इष्टस्य याचकः शौरेः शौरिमिष्टस्य याचकः ॥

---

१. 'र्थः ॥ दिब' २. 'कृति । कर्त क पाठः.

कृतीत्युक्तेस्ताद्धितयोगे न । प्रज्ञाद्यणि 'प्रज्ञाश्रद्धा-'(५. २. १०१) इति णे च धर्मं प्राज्ञः, पुराणं श्राद्धः, मुकुन्दमार्च्चः । अत्र 'विभाषोपसर्गे । (२. ३. ५९) इत्यतो विभाषानुवृत्तेः कृत्यपि क्वचित् षष्ठी नेति केचिदिति शङ्करः । धार्यैरामोदमुत्तमम् । गत्यर्थकर्मणि कृत्षष्ठी न । व्रजं गमनम् । व्रजाय गमनम् ॥

## उभयप्राप्तौ कर्मणि (२. ३. ६६)

कर्तरि कर्मणि च सहप्राप्तौ कर्मण्येव षष्ठी स्यात् । कर्तर्यपि वेति वृत्तिः ।

अद्भुतं खलु बालेन शैलस्योद्धरणं तदा ।
विकल्पादिह बालस्य शैलस्योद्धार इत्यपि ॥

स्त्रीलिङ्गे याऽकाकारौ तत्र षष्ठ्येव तु द्वयोः ।
जाता कृष्णस्य कंसस्य बिभित्सा भेदिकापि च ॥

समासप्रतिषेधोऽत्र द्वयोः षष्ठ्यां न जायते ।
विप्रस्य धर्मजिज्ञासा कृष्णस्य गिरिधारणम् ॥

येनादर्शनमित्युक्तेरर्थप्राप्ते तु कर्मणि ।
तृतीया कर्तरि भवेत् साधु कृष्णेन रक्षणम् ॥

## क्तस्य च वर्तमाने (२. ३. ६७)

वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । सतां विदितः । सतां पूजितः । 'मतिबुद्धि-' (३. २. १८८) इति क्तः । तेन 'उपज्ञाते' (४. ३. ११५) इति सूत्रोक्तेर्वर्तमानक्तवतामपि क्वचिद् भूतक्तसिद्ध्या तत्र षष्ठ्यभावात् 'पूजितो यः सुरै'रित्यादि ॥

## अधिकरणवाचिनश्च (२. ३. ६८)

अधिकरणार्थस्य क्तस्य योगे षष्ठी स्यात् । हरेरासितं वनम् ।
सकर्मणां तूभयत्र षष्ठ्येवेति हरोऽब्रवीत् ।
हरेर्वनस्य यातोऽध्वा तस्यान्नस्याशिता मही ॥

१. 'पि' क. पाठः

न लोकाव्ययनिष्ठाखलर्थतृनाम् ( २. ३. ६९)

ल उ उक इत्येतेषामव्ययादीनां च प्रयोगे षष्ठी न स्यात्। लादेशे – पुण्यं कुर्वन् कुर्वाणः चक्रवान्। किकिनोरपि लिड्वत्त्वाद् गिरिं दध्रिः। शुभं चक्रिः। दैत्यान् मामहिः। शेषविवक्षायां त्वेषु षष्ठी स्यादिति हरः। ओदनस्य पचन्नित्यादि। उकारान्तेषु – हरिं दिदृक्षुः। अलङ्करिष्णुः। उक – दैत्यान् घातुकः। भाषायां कर्मणि निषेधः। लक्ष्म्याः कामुकः। अव्यये – घृतं भुक्त्वा वनं गन्तुं प्रवृत्तः। निष्ठायां – दैत्यान् हतवान्। विष्णुना हता दैत्याः। नपुंसके भावे क्तेऽपि शेषविवक्षायामेव षष्ठी। अन्यदा न। तस्या यातं रम्यम्। तया यातं रम्यम्। खलर्थे – ईषल्लभो हरिस्त्वया। शेषविवक्षया मम सुलभ इत्यपि। तृन्निति शतृ इत्यारभ्य तनो नकारेण प्रत्याहारः। तेन शानन्नादेरपि ग्रहः। शानन् – सोमं पवमानः। चानश् – वहमानो मितं धनुः। इङ्धातोः शतृ। वेदमधीयन्। तृन् – रक्षिता लोकान्। 'द्विषः शतुर्वा वाच्यः'। मुरस्य द्विषन्। मुरं द्विषन्॥

अकेनोर्भविष्यदाधमर्ण्ययोः (२.३.७०)

भविष्यद्विहितस्याकस्य भविष्यदाधमर्ण्ययोरिनश्च योगे षष्ठी न। अन्नं भोजको व्रजति। तुमुनर्थे ण्वुल्। इनस्तु-ग्रामं गमी। शतं दायी॥

कृत्यानां कर्तरि वा (२. ३. ७१)

मया सेव्यो मम सेव्यो वा हरिः। उभयप्राप्तौ कृत्ययोगे षष्ठी न। कृष्णेन मोक्षं नेतव्योऽहम्॥

तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् (२.३.७२)

तुल्यार्थैर्योगे तृतीया, विकल्पात् षष्ठी च स्यात्। कृष्णस्य सदृशः। कृष्णेन सदृशः। कृष्णस्यानुकरोति इत्यादिस्तुल्यार्थ-योगादित्येके। शेषविवक्षयेति हरः। कर्मत्वविवक्षायां कृष्णमनुकरो-

तीत्यपि । तुलोपमाभ्यां योगे तु तृतीया न । कृष्णस्य तुलोपमा वा नास्ति । 'तुलां यदारोहति दन्तवाससे'ति तु सहार्थे तृतीयेति प्रसादे । हरस्तु कर्मार्थतया सदृशार्थयोरेव तुलोपमाशब्दयोर्निषेधाद् भावार्थयोस्तयोः करणे तृतीयापि स्यादित्याह ।

जलदस्य तुला गात्रं भुजगस्योपमा भुजः ।
अधरेण तुलामेति पल्लवो वल्लवीपतेः ॥

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः (२. ३. ७३)

आशिषि द्योत्यायामायुष्यादियोगे चतुर्थी षष्ठी च स्यात् । नृपायायुष्यं मद्रं भद्रं कुशलं सुखमर्थो हितं वा भूयात् । नृपस्येति वा । सर्वत्र पर्यायेष्वपीष्टत्वान्मद्रभद्रग्रहः व्यर्थः । चिरजीवितं मङ्गलं निरामयं शर्म प्रयोजनं पथ्यं वास्मै भूयात् । सुखहिताभ्यामनाशिष्यप्याह भोजः । भक्ताय सुखं हितं च कुरुते हरिः । भक्तस्येति वा ॥

आधारोऽधिकरणम् (१. ४. ४५)

क्रियाश्रययोः कर्तृकर्मणोराधारोऽधिकरणाख्यः ॥

सप्तम्यधिकरणे च (२. ३. ३६)

चकाराद् दूरान्तिकार्थेभ्यश्च ।

आधारः किल षोढा स्यात् तत्रौपश्लेषिकस्तथा ।
सामीप्यं विषयो व्याप्यो निमित्तं चौपचारिकः ॥
उपश्लेषे कटे शेते पिठरे पचतीति च ।
सामीप्ये तु सरित्यास्ते विषयेऽरिषु दारुणः ॥
तद्गोचरं भवत्यस्य दारुणत्वमितीर्यते ।
अनन्यत्र गतिस्त्वत्र विषयश्चेद् वने मृगाः ॥
व्याप्तौ त्रिभुवने कृष्णो निमित्ते वाचि दृष्यात ।
तथौपचारिके चित्ते वर्तते मत्तकाशिनी ॥

१. 'गे तृ' ख. पाठः.

'साध्वसाधुयोगे च सप्तमी वाच्या'। सत्सु साधुः, रिपुष्व-साधुः। इह क्रियाविवक्षाभावाद् विषयसप्तम्यप्राप्तिः।

कर्मभूतेन सम्बद्धान्निमित्तात् सप्तमीष्यते।
चर्मणि द्वीपिनं हन्ति फलस्यात्र निमित्तता॥

यस्य च भावेन भावलक्षणम् (२. ३. ३७)

भावः क्रिया। यस्य क्रियया क्रियान्तरं लक्ष्यते तत्र सप्तमी स्यात्। गोषु दुह्यमानासु गतः कृष्णः। अत्र गोदोहनं गमनकालस्य चिह्नम्। इयमेव सति सप्तमीत्युच्यते। क्वचिल्लक्षणत्वं विना क्रिया-द्वयसद्भावमात्रेऽपि स्यात्।

संसारार्तेषु लोकेषु विष्णुभक्ताः सुखं स्थिताः।
ते संसारार्दिता एते प्रीता इत्येव गम्यते॥

षष्ठी चानादरे (२. ३. ३८)

अस्मिन् द्योत्ये सति सप्तमीस्थाने षष्ठी सप्तमी च स्यात्। पश्यतो मे हरति, पश्यति मयि वा॥

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च (२. ३. ३९)

एभिर्योगे षष्ठीसप्तम्यौ स्तः। गवां स्वामी। गोषु स्वामी-त्यादि। गवामंशहर्ता गवां दायादः, गोषु दायादः। धनमेवा-नुभवितुं जातो धनस्य प्रसूतः, धने प्रसूतः॥

आयुक्तकुशलाभ्यां चासेवायाम् (२. ३. ४०)

आभ्यां तत्परत्वेऽर्थे षष्ठीसप्तम्यौ स्तः। आयुक्तः कुशलो वा धर्मे, धर्मस्य वा। तत्पर इत्यर्थः॥

यतश्च निर्धारणम् (२. ३. ४१)

यस्मात् समुदायाद् गुणादिभिरेकदेशस्य पृथक्करणं ततः षष्ठी-सप्तम्यौ स्तः। नृणां द्विजः श्रेष्ठः, नृषु वा। पदभेदेऽपि स्यात्। तव मम च त्वं पटुतरः। चकारेणात्र समुदायत्वम्॥

पञ्चमी विभक्ते (२. ३. ४२)

निर्धारणाश्रयस्य विभागे सति पञ्चमी स्यात्। अद्विजेभ्यो द्विजः श्रेष्ठः। अत्र मनुष्यत्वेनैकीकृतेषु विभागः। सर्पेभ्यो दुर्जनाः क्रूराः इत्यादौ क्रूरतयैकीकृतेषु सर्पान्विभज्यान्येषामतिक्रौर्यमुच्यते॥

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः (२. ३. ४३)

आभ्यां योगे पूजाद्योतने सप्तमी स्यात्। राजसु साधुर्निपुणो वायम्। तान् प्रति निपुणत्वात्पूजित इत्यर्थः। अर्चायामित्युक्ते-र्वस्तुमात्रोक्तौ न। राज्ञां निपुणः। अप्रतेरित्यत्र प्रतिपर्यन्वभियोगे नेति वाच्यम्। नृपान् प्रति साधुरित्यादि॥

प्रसितोत्सुकाभ्यां तृतीया च (२. ३. ४४)

आभ्यां योगे सप्तमी तृतीया च। कृष्णे कृष्णेन वा प्रसितोऽयम् उत्सुको वा। द्वौ तुल्यार्थौ॥

नक्षत्रे च लुपि (२. ३. ४६)

लुबन्तान्नक्षत्रादाधिकरणे सप्तमीतृतीये स्तः। पुष्ये गच्छेत् पुष्येण गच्छेत्। 'लुबविशेषे' (४. २. ४) इति लुप्॥

सप्तमीपञ्चम्यौ कारकमध्ये (२. ३. ७)

कारकद्वयमध्यस्थयोः कालाध्वनोरेते स्तः। अद्य भुक्त्वायं द्व्यहे[1] द्व्यहाद्[2] वा भोक्ता। इह स्थितो धानुष्कः क्रोशे लक्षं विध्यति, क्रोशाद् वा। अत्र पूर्वदिनभोक्तुरूर्ध्वदिनभोक्तुश्च भेदे कल्पिते कर्त्रोर्मध्ये कालः। तथा वेधितृवेध्ययोर्मध्येऽध्वा॥

---

१. 'हे भोक्ता द्व्यह' २. 'द् इति वा' क. ख. पाठः.

अधिरीश्वरे (१. ४. ९७)

अधिपतित्वेऽर्थेऽधिः कर्मप्रवचनीयः ॥

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी (२. ३. ९)

यस्मादधिकता बोध्या यस्य चेश्वरतोच्यते ।
कर्मप्रवचनीयेन तस्माद् भवति सप्तमी ॥

अधिके–हरावुप न कश्चित् । तस्मादधिक इत्यर्थः ।

ईश्वरे चेशितव्ये च सप्तमीष्टा विकल्पतः ।
माधवेऽधि त्रिलोकीयं त्रिलोक्यामधि माधवः ॥

'यस्मादधिकं–' (२. ३. ९) 'तदस्मिन्नधिकम्–' (५ २. ४५) इति च ज्ञापकादधिकशब्दयोगे पञ्चमी सप्तमी च सिद्धा ॥

इति प्रक्रियासर्वस्वे विभक्त्यर्थखण्डः ।

स्वनिर्मितत्वप्रणयावकुण्ठितः
स्वकाव्यदोषं न बुधोऽपि बुध्यते ।
अतोऽत्र सूरीन् गुणदोषवेदयान्
मदुक्तिसंशोधनकार्यमर्थये

---

अथ सुब्विधिखण्डः ।

अथ पुल्लिङ्गादिशब्देभ्यः सुब्विधिः ।

स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुप् (४. १. २)

ङ्याप्प्रातिपदिकादेते स्युः । सु औ जस् । अम् औट् शस् । टा भ्याम् भिस् । ङे भ्याम् भ्यस् । ङसि भ्याम् भ्यस् । ङस् ओस् आम् । ङि ओस् सुप् । इति च्छेदः ॥

सुलोपोऽक्रोर्जसः शी च शसो नग्ङसीति च ।
निर्देशार्थमुकाराद्या घेर्ङितीत्यादयेऽपि ङः ॥
औटष्टश्च सुपः पश्च सुट्सुबादिग्रहार्थकौ ।
त्रिकाणां प्रथमाद्याख्याः पूर्वाचार्योदिताः खलु ॥

तत्र त्वदन्तात् कृष्णशब्दात् प्रथमायां;

सुपः (१. ४. १०३)

एते सुपस्त्रीणि त्रीणि भूत्वा एकश एकवचनद्विवचनबहुवचनाख्याः ॥

द्व्येकयोर्द्विवचनैकवचने (१. ४. २२)

द्वित्वैकत्वयोरर्थयोः क्रमादेते स्तः । इत्येकवचनं सु । कृष्ण सु उलोपः । 'ससजुषो रुः' (८. २. ६६) इति रुः । 'खरवसानयोः—' (८. ३. १५) इति विसर्गः । कृष्णः ।

सामान्येनैकवचनं वाच्यं नैकत्व एव तत् ।
सङ्ख्याहीनेऽप्यव्ययादौ तेनैकवचनं भवेत् ॥

द्विवचने त्वर्थद्वित्वाद् द्विष्प्रयोगः । कृष्ण कृष्ण औ । 'सरूपाणाम् —' (१. २. ६४) इत्येकशेषः । कृष्ण औ ॥

प्रथमयोः पूर्वसवर्णः (६. १. १०२)

अकः प्रथमाद्वितीययोरचि परे द्वयोः सह पूर्वसवर्णदीर्घः स्यात् । तेन हरी विष्णू इतिवत् कृष्णा इति प्राप्ते,

नादिचि (६. १. १०४)

अवर्णादिचि परे उक्तदीर्घो न । 'वृद्धिरेचि' (६. १. ८८)कृष्णौ ॥

बहुषु बहुवचनम् (१. ४. २१)

बह्वर्थे एतत् स्यात् । कृष्ण कृष्ण कृष्ण जस् । जलोपः । सस्य 'न विभक्तौ—' (१. ३. ४) इत्यनित्त्वम् । एकशेषः । कृष्ण अस् । 'अतो गुणे' (६. १. ९७) इति पररूपं बाधित्वा पूर्वसवर्णदीर्घः कृष्णाः । सम्बोधनप्रथमायां कृष्ण स् ,

एकवचनं सम्बुद्धिः २. ३. ४९

सम्बोधनप्रथमाया एकवचनं सम्बुद्ध्याख्यम् ॥

एङ्ह्रस्वात्सम्बुद्धेः (६. १. ६८)

एङन्ताद्ध्रस्वान्ताच्च परः सम्बुद्धेर्हल् लुप्यते । कृष्ण । सम्बोधनाभिव्यक्त्यै क्वचिद्धेशब्दोक्तिः, हे कृष्ण । औजसोः प्राग्वत् । हे कृष्णौ । हे कृष्णाः । कृष्ण अम् । 'अमि पूर्वः' (६.१.१०७) कृष्णम् । औटि कृष्णौ । शसि जस्वद् दीर्घः । कृष्णास् ॥

तस्माच्छसो नः पुंसि (६. १. १०३)

पूर्वसवर्णदीर्घात् परस्य शसः सस्य पुंसि नत्वं स्यात् । कृष्णान् । कृष्ण टा । टलोपः ॥

टाङसिङसामिनात्स्याः (७. १. १२)

अदन्तादङ्गात् परेषामेषामिन आत् स्य इति स्युः । कृष्ण इन । 'आद् गुणः' (६. १.८७) । कृष्णेन । कृष्ण भ्याम् ॥

सुपि च (७. ३. १०२)

यञादौ सुपि परेऽदन्तस्याङ्गस्य दीर्घः स्यात् । कृष्णाभ्याम् । कृष्ण भिस् ॥

अतो भिस ऐस् (७. १. ९)

वृद्धिः । कृष्णैः । कृष्ण ङे । ङलोपः ॥

ङेर्यः (७. १. १३)

अदन्तात् परस्य ङेशब्दस्य यः स्यात् 'सुपि च' (७. ३. १०२) इति दीर्घः । कृष्णाय कृष्णाभ्याम् । कृष्ण भ्यः ॥

बहुवचने झल्येत् (७. ३. १०३)

झलादौ बहुवचने सुपि परेऽत एत् स्यात् । कृष्णेभ्यः । ङसेरात् । सवर्णदीर्घः । कृष्णात् । कृष्णाभ्याम् कृष्णेभ्यः ङसः स्यत्वम् । कृष्णस्य । कृष्ण ओस् ॥

ओसि च (७ ३. १०४)

ओसि परे अत एत् स्यात्। अय्। कृष्णयोः। कृष्ण आम्॥

ह्रस्वनद्यापो नुट् (७. १. ५४)

ह्रस्वान्तान्नद्यन्तादाबन्ताच्च परस्यामो नुट् स्यात्। 'सुपि च' (७ ३. १०२) इति दीर्घः। कृष्णानाम्। कृष्ण ङि। ङलोपः 'आद् गुणः' (६. १. ८७)। कृष्णे। आद् गुणस्य षत्वतुकोरसिद्धत्वात् कृष्णे च्छत्रमित्यत्र ह्रस्वान्नित्यं तुकि प्राप्ते 'सम्प्रसारणङीट्सु' प्रतिषेधो वाच्य इति ङावसिद्धत्वाभावात् पदान्ताद् दीर्घाद्वा तुक्। कृष्णे च्छत्र। कृष्णे छत्र। ओसि कृष्णयोः। कृष्ण सु। झल्येत्त्वम्। प्रत्ययस्य षः। कृष्णेषु। कृष्णस्य मायावित्वाद् द्वित्वबहुत्वे॥

जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्

(१. २. ५८)

जातिमात्राभिधाने जातेरेकत्वादेकस्मिन्नर्थेऽपि वा बहुवचनं स्यात्। वन्द्या विप्राः। वन्द्यो विप्रः। संख्याप्रयोगे नेति वाच्यम्। एको विप्रः। पूजायां सर्वत्र बहुत्वमिष्टम्।

आचार्यान् पितृपादांश्च भट्टमिश्रान् नमाम्यहम्।
यूयं ब्रूथ महात्मान इत्येकत्वेऽपि दृश्यते॥
शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः।
इत्यादौ शक्यमित्येतत् सामान्योपक्रमाद् भवेत्॥

शक्यमिदमित्युपक्रम्य किं तदित्यपेक्षायां वाताः पातुमिति विशेषो योज्यः इति॥

सर्वादेस्तु – सर्वः। सर्वौ। सर्व अस्।

जसः शी (७. १. १७)

अदन्तात् सर्वनाम्नः परस्य जसः शी स्यात्। गुणः सर्वे। सर्व ङे॥

सर्वनाम्नः स्मै (७. १. १४)

अदन्तात् सर्वनाम्नः परस्य ङेशब्दस्य स्मै स्यात्। सर्वस्मै॥

ङसिङ्योः स्मात्स्मिनौ (७. १. १४)

अदन्तात् सर्वनाम्न एतत् । सर्वस्मात् । सर्व आम् ॥

आमि सर्वनाम्नः सुट् (७. १. ५२)

अवर्णान्तात्सर्वनाम्नः परस्यामः सुट् स्यात् । झल्येत् । षत्वम् । सर्वेषाम् । ङेः स्मिन् । सर्वस्मिन् । शिष्टं कृष्णवत् ॥

सर्वादिपाठकार्यं न संज्ञात्वे चोपसर्जने ।
सर्वः कश्चन सर्वायाप्यतिसर्वाय विष्णवे ॥

उभशब्दस्य द्विवचनटाब्मात्रविषयत्वात् स्मैभावादिस्तासिलादिश्च नास्तीति सर्वनामत्वकार्यं 'सर्वनाम्नस्तृतीया च' (२. ३. २७) इत्यादि स्वल्पमेव । उभौ । उभौ । उभाभ्यामित्यादि ॥

'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' । (१. १. ३४)

'स्वमज्ञातिधनाख्यायाम्' (१. १. ३५)

'अन्तरं बहिर्योगोपसंव्यानयोः' (१. १. ३६)

एषामर्थः संज्ञाखण्ड उक्तः । एते तु जसि वा 'सर्वनामाख्याः, पूर्वे, पूर्वाः । स्वे, स्वाः । अन्तरे, अन्तराः ।

पूर्वादिभ्यो नवभ्यो वा ७ १ १६)

एभ्यः परयोः ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादेरपि । शिष्टं सर्ववत् ।

विभाषा जसि (१. १. ३२)

द्वन्द्वस्थाः सर्वादयो जस्कार्ये वोक्तसंज्ञाः । विप्राः इतरे च विप्रेतरे, विप्रेतराः । बहुत्वाच्चात्र बहुवचनमेव । 'द्वन्द्वे च' (१. १ ३१) इत्यसर्वनामत्वाच्छेषं कृष्णवत् । विप्रेतराणाम् । विप्रेतरेषु ।

प्रथमचरमतयाल्पार्धकतिपयनेमाश्च (१. १. ३३.)

एते जसि वा सर्वनामसंज्ञाः । प्रथमे, प्रथमाः । चरमे, चरमाः । तयेति प्रत्ययः । द्वितये, द्वितयाः । स्थानिवत्त्वाद् द्वये, द्वयाः

इत्यादि शेषं कृष्णवत् । नेमस्य तु सर्वादित्वाच्छेषं सर्ववत् । 'तीयस्य वा ङित्सूपसङ्ख्यान'मिति वा सर्वनामत्वम् । द्वितीयस्मै, द्वितीयाय । द्वितीयस्मात्, द्वितीयात् । द्वितीयस्मिन्, द्वितीये । शेषं कृष्णवत् । निर्जरः ॥

जराया जरसन्यतरस्याम् (७. २. १०१)

जराशब्दस्याजादौ सुपि परे वा जरस् । अङ्गाधिकारे तदन्तविधिरिष्यते । निर्जरसौ । निर्जरसः । निर्जरसम् । निर्जरसौ । निर्जरसः । निर्जरसा । भिस ऐस्त्वे कृतेऽजादित्वाज्जरस् । निर्जरसैः । निर्जरसे । निर्जरसः । निर्जरसः । निर्जरसोः । निर्जरसाम् । निर्जरसि । निर्जरसोः । इत्यजादिषु ।

टाङस्योः प्रागिनाद्भावौ कृत्वा पश्चाज्जरस्विधिः ।
इत्येके निर्जरसिन प्रार्थ्यो निर्जरसात्सुखी ॥

जरस्भावाभावपक्षे हलादिषु च कृष्णवत् ।

पादः । पादौ ।

पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु (६. १. ६३)

पाददन्तनासिकामासहृदयनिशासृग्यूषदोर्यकृच्छकृदुदकास्यानां शसादौ परे क्रमात् पदादयो वा स्युः । पदः, पादान् । पदा, पादेन । पद्भ्यां, पादाभ्यामित्यादि । चर्त्वम् । पत्सु एवं दतः, दन्तान् । दता, दन्तेन । 'स्वादिषु —' (१. ४. १७) इति पदत्वाद् 'झलां जशोऽन्ते' (८. २. ३९) इति जश्त्वम् । दद्भ्यां, दन्ताभ्यामित्यादि । मासस्य मास्भावे, मासः, मासान् । मासा, मासेन । पदत्वाद् रुत्वयत्वयलोपाः । माभ्यां, मासाभ्यामित्यादि । सुपि तु 'वा शरि' (८. ३. ३६) इति वा विसर्गः । माःसु, मास्सु, मासेषु । यूषस्य यूषन्भावः । सर्वत्र शसादिष्वजादौ भत्वं हलादौ पदत्वं चोह्यम् । यूष्णः । यूष्णा । पदत्वे नलोपः । यूषभ्याम् । यूषभिः । अदन्तत्वाद् भ्यामि 'सुपि च' (७.३.१०२) इति दीर्घे, भिस ऐसि च प्राप्ते 'नलोपः सुप्स्वर –' (८. २. २) इति सुप्सम्बन्धिविधौ नलोपस्यासिद्धत्वेनादन्तत्वाभावान्न स्यात् । एवं यूष्णे यूषभ्यामित्यादि ।

विभाषा ङिश्योः (६. ४. १३६)

अन्नन्तस्य भस्य ङिश्योः परयोरल्लोपो वा स्यात् । यूष्णि, यूषणि । आदेशाभावे यूषान् । यूषेण । यूषाभ्यामित्यादि । पदादयः पृथक्छब्दाः इत्येके । तन्मते पत् पदावित्याद्यपि । द्वयोरह्नोर्भवो द्व्यह्नः अस्य ङौ,

सङ्ख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ (६. ३. ११०)

एतत्त्रयपूर्वस्याह्नस्य ङावहन् वा स्यात् । अल्लोपस्यापि विकल्पात् त्रिरूपम् । द्व्यह्नि, द्व्यहनि, द्व्यह्ने । एवं विगतमहो व्यह्नः । व्यह्नि, व्यहनि, व्यह्ने । सायाह्नि, सायाहनि, सायाह्ने ।

इत्यदन्ताः ।

आदन्तस्तु सोमपाः । सोमपौ । सोमपाः । हे सोमपाः । सोमपाम् । सोमपौ ॥

आतो धातोः (६. ३. १४०)

आदन्तस्य धातोर्भत्वेऽन्त्यलोपः स्यात् । सोमपः । सोमपाभ्यामित्यादि । एवं भूरिदावेणुध्माद्याः । हाहाः । सुटि प्राग्वत् । अधातुत्वादल्लोपाभावः । 'आदन्ताच्छसो नत्वं वे'ति कौमुदी । हाहान् । हाहाः । सवर्णदीर्घे हाहा । हलादौ सोमपावत् । ङयि वृद्धिः । हाहै । ङसिङसोः सवर्णदीर्घे हाहाः । ओसि वृद्धिः । हाहौः । हाहाम् । ङौ गुणः । हाहे । हाहौः । हाहासु । हाहाविव गायकान् पश्येत्यादौ द्विबहुत्वम् । 'आतोऽनापः (स० ६. ३. १३८) इति भोजहरदत्तोक्तेरनाबन्तस्याल्लोप एवेति केचित् । तेन सोमपावदपि ॥

हरिः । पूर्वसवर्णदीर्घः हरी ॥

जसि च (७. ३. १०९)

जसि परे ह्रस्वान्तस्याङ्गस्य गुणः स्यात् । हरयः ॥

ह्रस्वस्य गुणः (७. ३. १०८)

सम्बुद्धौ ह्रस्वान्तस्य गुणः स्यात् । हरे स् । 'एङ्ह्रस्वात्—' (६. १. ६९) इति सुलोपः । हे हरे । हरिम् । हरी हरीन् ॥

आङो नास्त्रियाम् (७. ३. १२०)

आङिति टा कथ्यते । घेः परस्याङोऽस्त्रियां ना स्यात् । हरिणा । हरिभ्याम् । हरिभिः ॥

घेर्ङिति (७. ४. १११)

घेरङ्गस्य ङिति सुपि परे गुणः स्यात् । हरये । गुणे कृते हरे अस्

ङसिङसोश्च (६. १. ११०)

एङो ङसिङसोरति परे पूर्वरूपं स्यात् । हरेः । ओसि हर्योः । हरिनाम् ,

नामि (६. ४. ३)

नामि परेऽजन्तस्याङ्गस्य दीर्घः स्यात् । हरीणाम् । कृष्णानानामित्यत्र तु परत्वात् सुपि चेत्येवोक्तम् । हरि इ ॥

अच्च घेः (७. ३. ११९)

घेः परस्य ङेरौत् स्याद् घेरत्त्वं च । हर औ । वृद्धिः । हरौ । हरिषु । सखि स ,

अनङ् सौ (७. १. ९३)

सखिशब्दस्यासम्बुद्धौ सौ परे अनङ् स्यात् । ङित्त्वादन्त्यस्य सखन् स ,

सर्वनामस्थाने चासम्बुद्धौ (६. ४. ८.)

असम्बुद्धौ सर्वनामस्थाने परे नान्तस्योपधाया दीर्घः स्यात् । सखान् स ॥

हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् (६. १. ६८)

हलन्ताद् दीर्घरूपङ्याबन्ताच्च परं सु ति सि इत्येदपृक्तं हल्लुप्यते । इति सुलोपः । प्रातिपदिकान्तत्वान्नलोपः । सखा । सखि औ ॥

सख्युरसंबुद्धौ (७. १. ९२)

सम्बुद्धेरन्यत्र सख्युः परं सर्वनामस्थानं णिद्वत् स्यात् । वृद्धिः । आयादेशः । सखायौ । सखायः । सम्बुद्धौ तु णिद्वत्त्वमनङ् च न । हे सखे । सखायौ । सखीन् । 'शेषो घ्यसखि'(१-४-७) इत्यघित्वान्नात्वं गुणश्च न । यण् । सख्या । सख्ये ॥

ख्यत्यात्परस्य (६. १. ११२)

ख्य त्य इत्याभ्यां परस्य ङसिङसोरत उत् स्यात् । सख्युः । सख्युः । सख्योः । सखीनाम् । ङौ तु —

औत् (७. ३. ११८)

इदुद्भ्यां परस्य ङेरौत् स्यात् । नच घिनदीत्वहीनयोः सखिपत्योरेव पर्यवस्यति । सख्यौ । हरिवदन्यत् । सख्यन्तस्य बहुव्रीहेस्तु अङ्गाधिकारे तदन्तविधेः 'सख्युरसम्बुद्धौ'(७ १-९२) इति णित्त्वमस्ति । अन्यत्र प्रातिपदिकग्रहणे तदन्तविध्यभावादसखीति घित्वनिषेधो न । बहुसखा । बहुसखायौ । बहुसखिना । बहुसखये । बहुसखेः । बहुसखौ । एवं किंसखा किंसखिनेत्यादिष्वपि समासान्तरहितेषूह्यम् ॥

पतिः समास एव (१. ४. ८)

अयं समास एव घिसंज्ञः नान्यत्र । पत्या पत्ये । त्यात्परस्य उत् । पत्युः । पत्यौ । शेषं हरिवत् । समासे तु श्रीपतिनेत्यादि । कतिशब्दस्य बहुत्वमेव ॥

डति च (१. १. २५)

डत्यन्ता संख्या षट्संज्ञा ॥

षड्भ्यो लुक् (७. १. २२)

षट्संज्ञेभ्यः परयोर्जश्शसोर्लुक् स्यात् । प्रत्ययलक्षणेन 'जसि च' (७-३-१०९) इति गुणे प्राप्ते 'न लुमताङ्गस्य

(१-१-६३) इति निषेधः । कति । कति । कतिभिः[1] । कतिभ्यः । इत्यादि । द्विशब्दो द्वित्व एव । द्वि औ । त्यदाद्यत्वे कृते कृष्णवत् । द्वौ द्वौ द्वाभ्यामित्यादि । उपसर्जनत्वे त्यदाद्यत्वं न । प्रियद्विः । हरिवत् । त्रिशब्दे बहुत्वे हरिवत् । त्रयः । त्रीन् । त्रि आम् —

त्रेस्त्रयः (७. १. ५३)

त्रेरामि त्रयादेशः स्यात् । नुड्दीर्घौ । त्रयाणाम् । त्रिषु ॥

ईदन्तस्तु बाहुलकादौणादिक ईप्रत्यये देवान् यजन् देवयजीरिति प्रक्रिया । सौ देवयजीः ॥

दीर्घाज्जसि च (३. १. १०५)

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । 'इको यण् -' (६-१ ७७)इति यण् । देवयज्यौ । देवयज्यः । हे देवयजीः । देवयजीम् । देवयज्यौ । देवयजीन् । देवयज्या । देवयज्ये । ङसिङसोः देवयज्यः । देवयज्योः । देवयज्याम् । दीर्घत्वान्नुडभावः । ङौ तु सवर्णदीर्घः । देवयजी । वातप्रमीः प्रत्ययौणादिकपक्ष एवम् । माङः क्विपि 'घुमास्था -' (६-४-६६) इतीत्वमिति पक्षे धात्वीकारत्वाद् ङौ 'एरनेकाच —' (६ ४ ८२) इति यणि वातप्रम्यि इति भेदः । अतिलक्ष्म्यादिश्च देवयजीवदिति कौमुदी । नयुक्तो चास्य पक्षान्तरं वक्ष्यते । ग्रामणीः । इयङि प्राप्ते 'एरनेकाच—' (६-४-८२) इति यण् । ग्रामण्यौ । ग्रामण्यम् । ग्रामण्यौ । ग्रामण्यः । शेषं देवयजीवत् । ङौ तु—

ङेराम्नद्याम्नीभ्यः (७. ३. ११६)

नद्या आबन्तान्नीशब्दाच्च परस्य ङेराम् स्यात् । ग्रामण्याम् ।

इह संयोगपूर्वत्वाद्यणभावेन सुश्रियौ ।
अनेकाच्त्वस्य चाभावाद्यणभावे नियाविति ॥

---

१. 'भिः इ' ख. ग. पाठः.

ङौ तु सुश्रियि पूर्वस्य नियस्त्वामि नियामिति ।
अधात्वंशे तु संयोगे हविन्यविति यण् भवेत् ॥
गतिकारकपूर्वस्यैवैऽनेकाच इत्यदः ।
तेन सन्महदित्यादौ स्यादुत्तमनियाविति ॥

ध्यः क्विपि सम्प्रसारणे आतः पूर्वरूपत्वे च सुधीः ॥

न भूसुधियोः (६. ४. ८५)

एतयोरुक्तयण् न । सुधियावित्यादि । सुधीष्वित्यत्र सम्प्रसारणपूर्वरूपत्वस्य 'षत्वतुकोः—' (६-१-८६) इत्यसिद्धत्वादाकारासद्भावादषत्वे प्राप्ते सम्प्रसारणङीट्स्विति सम्प्रसारणं सिद्धत्वात् षः । सुधीषु । सुधि[१] एव यणनिषेधात् प्रधीः ग्रामणीवत् । ङौ तु प्रध्यि । वेणुधीर्दोषपीरित्यादिश्चैवमेव । सुखमिच्छन् सुखीः । सुतमिच्छन् सुतीः । एतयोस्सिद्धिः सुब्धातुखण्डे वक्ष्यते । ङसिङसोः 'ख्यत्यात् —' (६ १-११२) इत्युत् । सुख्युः सुत्युः । एवं प्रस्तूनमिच्छन् प्रस्तूनीः । प्रस्तून्युः । निष्ठानत्वस्य पूर्वत्रासिद्धत्वाद् उत्वम् । एषु ख्यत्यादित्युत्वं वेति केचिदिति कौमुदी । सुख्यः । सुत्यः । प्रस्तून्यः । शेषमेषां प्रधीवत् ॥

विष्णुः, विष्णू , विष्णवः इत्यादि हरिवत् । क्रोष्टु स —

तृज्वत्क्रोष्टुः (७. १. ९५)

असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्तृजन्तक्रुशितुल्यरूपः स्यात् । क्रोष्टृ स —

ऋदुशनस्पुरुदंसोऽनेहसां च (७. १. ९४)

ऋदन्तानामुशनसादीनामप्यसम्बुद्धौ सौ परेऽनङ् स्यात् । क्रोष्टन् स —

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् (६. ४. ११)

अप्छब्दस्य तृन्तृजन्तयोः स्वस्रादीनामप्यसम्बुद्धौ सर्वनाम-

१. 'स्यत्रार्ध याणवधिारप्यत । तेन' इति करळवर्मदेवपाठः.

स्थाने परे उपधादीर्घः स्यात् । 'सर्वनामस्थाने च —' (६-४-८) इति दीर्घे सिद्धेऽपि परत्वाद्रस्योक्तिः । हल्ङ्यादिलोपः । नलोपः । क्रोष्टा । क्रोष्टृ औ ॥

ऋतो ङिसर्वनामस्थानयोः (७. ३. ११०)

ङौ सर्वनामस्थाने च परे ऋदन्तस्य गुणः स्यात् । क्रोष्टर् औ । 'अप्तृन् —'(६-४-११) इति दीर्घः । क्रोष्टारौ । क्रोष्टारः । सम्बुद्धौ तु तृज्वत्त्वाभावाद् हे क्रोष्टो । क्रोष्टारं । क्रोष्टारौ । शसि क्रोष्टून् ॥

विभाषा तृतीयादिष्वचि (७. १. ९७)

तृतीयादिष्वजादिविभक्तिषु क्रोष्टुर्वा तृज्वत् स्यात् । तृज्वत्त्वे यण् । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । ङसिङसोस्तृज्वत्त्वे क्रोष्टृ अस् —

ऋत उत् (६. १. १११)

ऋतो ङसिङसोरति परे उदेकादेशः स्यात् । रपरत्वात् क्रोष्टुर् स् संयोगान्तलोपः । रस्य विसर्गः । क्रोष्टुः । आमि तृज्वद्भावात्पूर्वं नुडिष्टः । तेनाजादित्वक्षयान्न तृज्वत्त्वम् । क्रोष्टूनाम् । ङौ 'ऋतो ङि —' (७-३-११०) इति गुणे क्रोष्टरि । क्रोष्ट्रोः । तृज्वत्त्वाभावे हलादौ च विष्णुवत् । क्रोष्टॄन् क्रोष्टॄणाम् इति च कौमुदी । तत् तृजन्तादेव ॥

हूहूः हूह्वौ हूह्व इत्यादि देवयजीवत् । ङौ हूह्वि । हाहा-हूहूशब्दावव्ययावित्यन्ये । अतिचमूरतिवधूरित्यादिस्तु अतिलक्ष्मीवत् । कंसल्वः । उवङि प्राप्ते —

ओःसुपि (६. ४. ८३)

धात्ववयवसंयोगपूर्वत्वरहितोवर्णान्तस्यानेकाचोऽजादौ सुपि परे यण् स्यात् कंसल्वौ कंसल्वः इति ग्रामणीवत् । ङौ कंसल्वि । एवमग्रे-गूजगत्स्वादि । स्वभूः । 'न भूसुधियोः' (६-४-८५) इति यण् न । स्वभुवावित्यादि । एवं स्वयम्भ्वादि ॥

धातृ स् । क्रोष्टुस्तृज्वत्त्वोक्तवदनङादि सर्वम् । धाता । धातारौ । धातारः । धातृ स । ह्रस्वात् सम्बुद्धिलोपे प्राप्ते परत्वाद्

'ऋतो ङि—'(७-४-११०) इति गुणः । धातर् स । हल्ङ्यादिलोपो रस्य विसर्गश्च । हे धातः । धातारम् । धातारौ । पूर्वसवर्णदीर्घः । धातॄन् । धात्रा । धातृभ्यामित्यादि । आमि धातॄणाम् । एवमन्येऽपि तृन्तृजन्ताः[1] । एवमन्यत्रापि ।

अव्युत्पन्नमुणादीत्याश्रित्योणादितृन्तृजन्तोऽपि ।
नप्त्रादिरत्र कथितः पित्रादेर्वैदशस्य विनिवृत्त्यै ॥

पिता । अप्तृन्नादावनुक्तेरदीर्घः । पितरावित्यादि सुटि । शेषं धातृवत् । एवं जामातृभ्रात्रादि । ना । नरौ । नरः ॥

नृ च (६. ४. ६)

नृशब्दो नाम्यदीर्घः सदीर्घश्च स्यात् । नृणाम् नॄणाम् । शेषं पितृवत् । गो स् —

गोतो णित् (७. १. ९०)

गोत इति तपरोक्तिरोद्ग्रहणार्था । ओदन्तात्परं सर्वनामस्थानं णित् स्यात् । वृद्धिः । गौः । गावौ । गावः । हे गौः । गो अम् —

औतोऽम्शसोः (६. १. ९३)

इत्यात्वमेकादेशः । गाम् । गावौ । गाः । गवे । 'ङसिङसोश्च, (६-१-११०)इति पूर्वरूपत्वम् । गोः । गवोः । गवाम् । गवि । गोषु । एव सुद्यौः । सुद्यावौ । सुद्याम् । सुद्यावौ । सुद्याः । सुद्यावा । सुद्योभ्यामित्यादि । रैशब्दः पुंस्यप्युक्तः प्रसादादौ । रै स —

रायो हलि (७. २. ८५)

हलादौ सुपि परे राय आत्वं स्यात् । राः । अजादिष्वाय्, हलादिष्वात्वम् । रायौ । रायः । हे राः । राभ्यामित्यादि । आत्वे तदन्तविधेः सुराः । सुरायौ । सुराभ्यामित्यादि । ग्लौः । ग्लावौ । हे ग्लौः । ग्लौभ्यामित्यादि ॥

इत्यजन्तपुल्लिङ्गाः ॥

— —

1. न्ताः, अ. ख. पाठः.

आदन्तस्त्रीलिङ्गो रमाशब्द.। रमा। आबन्तत्वात्स्वादिः। 'हल्ङ्याभ्य---' (६-१-६८) इति सुलोपः। रमा॥

### औङ आपः (७. १. १८)

औऔटौरौङिति संज्ञा। आबन्तात् परस्यौङः शी स्यात्। 'आद्गुणः' (६-१-८७) रमे। रमाः॥

### सम्बुद्धौ च (७. ३. १०६)

आप एत्वं स्यात्। 'एङ् ह्रस्वात्—' (६-१-६९) इति सुलोपः। हे रमे। रमाम्। रमे। रमाः॥

### आङि चापः (७. ३. १०५)

आङ्योसि च परे आबन्तानामेत्वं स्यात्। अय्। रमया। रमाभ्याम्। रमाभिः। रमा ए —

### याडापः (७. ३. ११३)

आबन्तात् परस्य ङित्सुरो याट् स्यात्। 'वृद्धिरेचि' (६-१-८८) रमायै। ङसिङसोः रमायाः। ओस्येत्वम्। रमयोः। आपो नुट्। रमाणाम्। ङेराम् याट् च। रमायाम्। रमयोः। रमासु। 'नाज्झलौ' (१-१-१०)इत्यत्र दीर्घहलोः सावर्ण्यानिषेधाद् आकारस्य हकारेण सवर्णग्रहादिणत्वेन सोमपासु रमास्वित्यादौ षत्वं प्राप्तं 'वयस्यासु मूर्ध्नो मतुप्' (४-४-१२७) इति निर्देशान्न स्यात्। प्रोष्ठपदाशब्दस्य तु— 'फल्गुनीप्रोष्ठपदानां च नक्षत्रे' (१-२-६०)।

फल्गुन्यौ द्वौ हि नक्षत्रे तथा प्रोष्ठपदे उभे।
तत्र ह्यर्थे बहुत्वं वा तेन रूपं द्विधा भवेत्॥

प्रोष्ठपदे प्रोष्ठपदाः इत्यादि। 'विशाखयोश्च' (१-२-६२) इति छान्दस एकवचनविकल्पो लोकेऽप्यस्तीति टीकासर्वस्वे।

---

१. 'मा आ' ख. ग. पाठः.

तेनैकस्वादिरत्रे। विशाखा, विशाखे इत्यादि। अप्सुमनस्सिकता-समावर्षाणां स्त्रीत्वम्। बहुत्वं तु प्रायिकम्। बहुत्वपक्षे सिकताः सिकताभिरित्यादि। अन्यत्र रमावत्। एवं समावर्षे। सर्वादीनां टापि—

सर्वनाम्नः स्याड्ढ्रस्वश्च (७. ३. ११४)

आबन्तात् सर्वनाम्नः परस्य ङिद्वचनस्य स्याट् स्यादापो ह्रस्वश्च। सर्वस्यै। सर्वस्याः। सर्वस्याम्॥

आमि सर्वनाम्नः सुट् (७. ३. ११४)

सर्वासाम्। शेषं रमावत्॥

विभाषा दिक्समासे बहुव्रीहौ (१. १. २८)

'दिङ्नामान्यन्तराले'(२.२ २६) इति समासे सर्वादेः सर्वनामता वा स्यात्। उत्तरपूर्वस्यै, उत्तरपूर्वायै इत्यादि॥

विभाषा द्वितीयातृतीयाभ्याम् (७. ३. ११५)

आभ्यां परस्य ङित्सुपः स्याड्ढ्रस्वश्च वा स्यात्। द्वितीयस्यै. द्वितीयायै॥

अम्बार्थनद्योर्ह्रस्वः (७. ३. १०३)

अम्बार्थानां नदीनां च ह्रस्वः स्यात् सम्बुद्धौ। हे अम्ब। एवमन्नाल्लाकाः। अम्बार्थेषु डलकवतीनां ह्रस्वो न। हे अम्बाडे अम्बाले। अम्बिके। जरा। अचि वा जरस्। जरसौ। जरे। औङः शीत्वेन जरसीत्यपि कौमुदी। जरसः। जराः। हे जरे। जरसम्। जरामित्यादि। नासिकायाः शसादौ 'पद्दन्—'(६ १-६३)इति वा नस्। नसः। नसा नोभ्यामित्यादि। निशायाः शसादौ निश्। निशः। निशा। पदान्तत्वात् व्रश्चादिषत्वं जश्त्वं च। निड्भ्याम्। निड्भिः। निट्सु॥

'मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः' इति पृतनाया वा पृत्। पृता पृद्भ्यामित्यादि। क्षीरपा इत्यादयः स्त्रीलिङ्गेऽपि सोमपावत् स्युः। अडन्तपक्षे भाशब्दो रमावत्। क्विबन्तपक्षे सोमपावत्। भाः, भौ, भाः। इत्यादि।

मतिः, मती इत्यादि हरिवत्। स्त्रीत्वाच्छसो नत्वमाङो ना च न। मतीः। मत्या। मति ए—

ङिति ह्रस्वश्च (१. ४. ६)

ईदूत्सम्बन्धी ह्रस्वो ङित्सुपि वा नदीसंज्ञः। चकारेण 'नेय ङुवङ्स्थानौ—' (१–४ ४) इति निषद्धाश्च।

आण् नद्याः (७. ३. ११२)

नद्याः परेषां ङितामाट् स्यात्। मति आ ए।

आटश्च (६. १.९०)

आटोऽचि परे एका वृद्धिः स्यात्। मति ऐ। यण्। मत्यै। अन्यत्र मतये। एवं ङसिङसोः मत्याः, मतेः। 'औत् (६ ३-११८) इति ङेरौत्वे प्राप्ते

इदुद्भ्याम् (७. ३. ११७)

नदीसंज्ञाभ्यामिदुद्भ्यां परस्य ङेरामेव। मत्यां मतौ। त्रि जस् -

त्रिचतुरोः स्त्रियां तिसृचतसृ (७. २. ९९)

स्त्र्यर्थयोस्त्रिचतुरोः सुप्येतौ स्तः। 'ऋतो ङि -'(७-४-११०) इति गुणे प्राप्ते।

अचि र ऋतः (७. २. १००)

तिसृचतस्रोर्ऋतोऽचि परे रेफः स्यात्। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः। तिसृभ्यः। तिसृ आम्। अत्र रत्वं बाधित्वा नुडिष्टः। तिसृ नाम्।

न तिसृचतसृ (६. ४. ४)

एतयोर्नामि दीर्घो न। णत्वम्। तिसृणाम्।
स्त्रीवाचिनोस्त्रिचतुरोरुपसर्जनयोरपि।
आदेशः स्यात् प्रियास्तिस्रो यस्य प्रियतिसा हि सः॥

अत्रापि रत्वम्। प्रियातिस्रौ। प्रियतिस्रः। हे प्रियतिसः। प्रियतिस्रम्। प्रियतिस्रौ। प्रियतिस्रः। प्रियतिस्रा। प्रियतिस्रे। ङसिङसोः प्रियतिस्रः। प्रियतिसृणाम्। प्रियतिस्रि। इति पुल्लिङ्गे। क्लीबेऽपि प्रियतिसृ। प्रियतिसृणी इत्यादि। अत्रापि रत्वात् पूर्वं नुमिष्टः। एवं प्रियचतसृ। प्रियचतस्रावित्यूह्यम्। द्वि औ। त्यदाद्यत्वे टापि रमावत्। द्वे द्वे इत्यादि ॥

ङ्यन्तत्वात् सुलोपः। गोपी। गोप्यौ। गोप्यः। नदीत्वात् 'अम्बार्थ—' (७. ३. १०७) इति ह्रस्वः। हे गोपि। गोपीम्। गोप्यौ। गोपीः। गोप्या। 'आण् नद्याः' (७. ३. ११२) गोप्यै। गोप्याः। गोपीनाम्। गोप्याम्। फल्गुन्योर्वा बहुत्वात् फल्गुन्यौ फल्गुन्यः इत्यादि। लक्ष्मीः। अङ्यन्तत्वान्न सुलोपः। शेषं गोपीवत्। एवं तरीतन्त्र्यादयः। 'ईयसश्च' (५. ४. १५६) इति कबभावात् पुंसि बहुप्रेयसी कृष्ण इत्यत्र ङ्यन्तत्वाविशेषात् सुलोपः। पुल्लिङ्गत्वात् तु 'यू स्त्र्याख्यौ—' (१. ४. ३) इति नदीत्वस्याभावे प्राप्ते 'प्रथमलिङ्गग्रहणं चेति' वार्त्तिकम्। प्रत्ययान्तरवशात् समासेन वा लिङ्गान्तरप्राप्तौ नदीसंज्ञानां प्रथमलिङ्गकायमेवेत्यर्थः। तेन सर्वं गोपीवदेव। हे बहुप्रेयसि। शसि बहुप्रेयसीः। बहुप्रेयस्यै। बहुप्रेयस्याः। बहुप्रेयसीनाम्। ङौ बहुप्रेयस्याम् इति। एवं पुंस्यतिलक्ष्मीः हे अतिलक्ष्मि, इत्याद्यपि लक्ष्मीवत्। तद्वदतितन्त्र्यादावप्यूह्यम्। श्रीः। धातुत्वादियङ्। श्रियौ। श्रियः ॥

## नेयङुवङ्स्थानावस्त्री (१. ४. ४)

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः। स्त्रीशब्दस्तु नद्येव। एवमनदीत्वात् सम्बुद्धौ न ह्रस्वः। हे श्रीः। श्रियम् श्रियौ। श्रियः। श्रिया। ङित्सु 'ङिति ह्रस्वश्च' (१. ४. ६) इति वा नदीत्वम्। आट्। श्रियै। श्रिये। श्रियाः। श्रियः ॥

## वामि (१. ४. ५)

'नेयङुवङ्स्थानौ' (१. ४. ४) इति निषिद्धं नदीत्वमामि वा स्यात्।

---

१. 'त्यादूह्यम्' २. 'गोप्योः गोपीनाम्' केरळवर्मदेवपाठः,

नदीत्वे नुट् । श्रीणाम् । श्रियाम् । ङौ तु श्रियां श्रियि । स्त्री । उणादिमद्धस्यास्य ङ्यन्तत्वात् सुलोपः ॥

स्त्रियाः (६. ४. ७९)

स्त्रीशब्दस्याचि परे इयङ् स्यात् । स्त्रियौ । स्त्रियः । नदीत्वाद्ध्रस्वः । हे स्त्रि । । स्त्री अम् —

वाम्शसोः (६. ४. ८०)

अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियौ । स्त्रियः । स्त्रीः । स्त्रिया । नदीत्वान्नित्यमाट् । स्त्रियै । स्त्रियाः । स्त्रियोः । स्त्री आम् । इयङि प्राप्ते परत्वान्नुक्तो नुट् । स्त्रीणाम् । ङेराम् । स्त्रियाम् । स्त्रियाः । स्त्रीषु ।

पुंसो हि ग्रामनेतृत्वं तेन न ग्रामणीर्नदी ।
सेनानीखलपूमुख्याश्चैवं पुल्लिङ्गवन्मताः ॥[1]

आध्यानादिस्तु नारीष्वप्यस्ति साधारणी क्रिया ।
तस्मादाधीः प्रधीः संध्रीः कथन्ता लक्ष्मीवद्दशाः ॥

धेनुः, धेनू, धेनवः, हे धेनो इत्यादि मतिवत् । भीरोस्तु सम्बुद्धौ संज्ञापूर्वकत्वात् गुणो नेति शङ्करः । हे भीरु ।

वधूः गौरीवत् । एवं सुभ्रूः । सुभ्रुवौ । हे सुभ्रूः । ऊङन्तपक्षे नदीत्वाद्ध्रस्वः । हे सुभ्रु । वर्षाभूः । 'न भूसुधियोः' (६. ४. ८५) इति यणभावाद् उवङि प्राप्ते—

वर्षाभ्वश्च (६. ४. ८४)

अस्याचि सुपि यण् स्यात् । वर्षाभ्वौ । वर्षाभ्वः । नदीत्वाद्ध्रस्वः । हे वर्षाभु । वर्षाभ्वम् । वर्षाभ्वौ । वर्षाभ्वः । शेषं वधूवत् । वर्षाभ्वाणामित्यत्र 'एकाजुत्तरपदे —' (८. ४. १२) इति णः । पुनर्भूकारकोऽप्येवं यणिष्यते । करभ्वश्चाह माधवः । पुनर्भूः पुनर्भ्वावित्यादि ॥

---

१. 'पुंसोऽर्थे,' २. 'भ्रूः श्रीवत् । एवं' केरलवर्मदेवपाठः

स्वसा धातृवत् । शसि स्वसॄः इति भेदः । माता पितृवत् । शसि मातॄः । एवं यातृननान्दृदुहितरः । द्यौर्गोवत् । रैशब्दः स्त्रीत्वेऽपि पुंवत् । नौर्ग्लौवत् ॥

इत्यजन्तस्त्रीलिङ्गाः ॥

---

क्लीबेऽदन्तः ।

ज्ञान सु,

स्वमोर्नपुंसकात् (७. १. २३)

क्लीबात् परयोः स्वमोर्लुक् स्यात् । इति लुकि प्राप्ते—

अतोऽम् (७. १. २४)

अदन्तात्क्लीबात् स्वमोरम् स्यात् । 'अमि पूर्वः' (६.१.१०७) ज्ञानम् ॥

नपुंसकाच्च (७. १. १९)

क्लीबात् परस्यौङः शी स्यात् । ज्ञाने ॥

जश्शसोः शिः (७. १. २०)

क्लीबात् परयोर्जश्शसोः शिः स्यात् । ज्ञान इ ॥

शि सर्वनामस्थानम् (१. १. ४२)

इति शेस्तत्संज्ञत्वम् ॥

नपुंसकस्य झलचः (७. १. ७२)

झलन्तस्याजन्तस्य च क्लीबस्य सर्वनामस्थाने परे नुम् स्यात् । ज्ञानन् इ । 'सर्वनामस्थाने च—' (६. ४. ८) इति दीर्घः । ज्ञानानि । सम्बुद्धौ ज्ञान अम् । 'अमि पूर्वः' (६. १ १०७) इत्यकारस्य पूर्वरूपम् । 'एङ्ह्रस्वात्—' (६. १. ६९) इति सम्बुद्धेर्मलोपः । हे ज्ञान । द्वितीया प्रथमावत् । ज्ञानं, ज्ञाने, ज्ञानानि । क्लीबे शिरेव सर्वनामस्थानमित्यौओटोरपि भत्वेन ज्ञाने इत्यत्र ज्ञान ई इति स्थिते 'यस्य' (६-४-१४८) इति लोपे प्राप्ते औङःश्यां परे प्रतिषेधो वाच्य

इति न स्यात् । टादौ कृष्णवत् । सर्वादीनामपि प्रथमाद्वितीययोर्ज्ञानवत् । शेषं पुंवत् । कतर स्,

अद्ड्डतरादिभ्यः पञ्चभ्यः (७. १. २५)

क्लीबेभ्य एभ्यः परयोः स्वमोरद्ड् इत्यादेशः स्यात् । कतर अद्ड् ।

दीर्घं पूर्वसवर्णाख्यं रोद्धुं डित्वमिहाश्रितम् ।
सम्बुद्धौ च ह्रस्वनाशादेङ्ह्रस्वादित्यलुप्तये ॥

कतरद् । 'वावसाने'(८-४-५६) इति वा चर्त्वम् । कतरत्, कतरद् द्वितीया प्रथमावत् । एवं कतमत्, अन्यत्, अन्यतरत्, इतरत् । एकतरान्नेष्टम् । एकतरम्, एकतरे इत्यादि । अजरशब्दस्य स्वमोरमि कृते वा जरस् । अजरसम्, अजरम् । अजरसी, अजरे । अजर इ । नुमि प्राप्ते परत्वाज्जरस् । अजरस् इ । पुनर्झलन्तत्वान्नुम् । अजरन्स् इ ।

सान्तमहतः संयोगस्य (६. ४. १०)

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे । नस्यानुस्वारः । अजरांसि, अजराणि । द्वितीया तद्वत् । शेषं निर्जरवत् । 'पद्दन्–'(६. १. ६३) इति हृदयोदकास्यानां शसादौ हृदुदन्नासन्नादेशाः । शसः शिभावे नुम् । हृन्दि । हृदा हृद्भ्यामित्यादि । उदन् इ 'सर्वनामस्थाने च–'(६.४.८) इति दीर्घः । उदानि । अल्लोपे उद्ना, उदभ्यामित्यादि । एवम् आसानि आस्ना आसभ्यामित्यादि । शीर्षस्य शसादौ शीर्षन् वेति शीर्षाणि । शीर्ष्णा । शीर्षभ्यामित्यादि । 'मांसपृतना–' इति मांस्भावे मांसि । मांसा । मांभ्यामित्यादि । विकल्पं ज्ञानवद्रूपम् ॥

'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१. २. ४७) इति ह्रस्वः । सोमपं ज्ञानवत् । चतुर्थ्येकवचने 'ङेर्यः–'(७. १. १३) इति यकारे 'सुपि च' (७ ३. १०२) इति दीर्घे तस्य च धात्वाकारत्वाद् 'आतो धातोः' (६ ४. १४०) इति लोपे सोमप्य इति माधवः । सोमपायेत्यन्ये ॥

वारि स् । 'स्वमोर्नपुंसकात्' (७. १. २३) इति लुक् । वारि ॥

---

१. 'हे कतर । कतराणि । हे कतरत् हे कतरद् द्वितीया' इत्यधिकः पाठः ।

## इकोऽचि विभक्तौ (७. १. ७३)

इगन्तस्य क्लीबस्याजादौ सुपि नुम् स्यात्। वारिणी। दीर्घः। वारीणि। सम्बुद्धौ स्रोर्लुकि 'न लुमताङ्गस्य' (१. १ ६३) इति निषेधाद् गुणो न। तस्य निषेधस्यानित्यत्वादिगन्तक्लीबे गुण इत्येके। हे वारे, हे वारि। द्वितीया प्राग्वत्। नुमः परत्वान्नाभावः। वारिणा। वारि ए। 'घेर्ङिति' (७. ३. १११) इति गुणे प्राप्ते वृद्ध्यौत्वगुणेभ्यः पूर्वं नुमेवेष्टः। वारिणे। वारिणः। वारिणोः। वारि आम्। अत्र नुमं बाधित्वा नुडेवेष्टः। तत्र 'नामि' (६. ४. ३) इति दीर्घः। वारीणाम्। वारिणि। वारिणोः। वारिषु। शुचीति पुल्लिङ्गसाधारणः। सोऽपि शसन्तं वारिवत्॥

## तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य (७ १ ७४)

उक्तपुंस्कमिगन्तं क्लीबं टादावजादिसुपि वा पुंवत् स्यात्। टायां नाभावान्न विशेषः। अन्यत्र शुचिने, शुचये इत्यादि वारिवद्गुरुवच्च। पीलुर्वृक्षः पीलु फलम् इति पीलुशब्दस्योक्तपुंस्कत्वेऽपि अर्थभेदान्न पुंवत्त्वम्। पीलुने फलायेत्येव। अस्थि शसन्तं वारिवत्॥

## अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः (७ १ ७५)

एषां टादावच्यनङुदात्तः स्यात्। 'अल्लोपोऽनः' (६. ४. १३४) अस्थ्ना। अस्थ्ने। अस्थ्नः अस्थ्नोः। अस्थ्नाम्। अस्थ्नि। अस्थनि। अस्थ्नोः। अस्थिषु। एवं दध्यादि। तदन्तस्य क्लीबस्याप्यनङिष्टः। प्रियदध्ना कृष्णेनेत्यादि।

एवं सुसक्थ्ना लोलाक्ष्णा गूढास्थ्नेत्यादि दृश्यताम्।
सक्थ्यक्ष्णोः षच् समासान्तस्यानित्यत्वादिहाकृतः॥

क्लीबत्वाद्ध्रस्वः। सुधि, सुधिनी सुधीनि। हे सुधे, सुधि इत्यादि वारिवत्। टादौ वा पुंवत्। सुधिया सुधिनेत्यादि। एवं ग्रामण्याद्यूह्यम्। मधु वारिवत्। मृदु शुचिवत्। सानुशब्दस्य शसादौ स्नुर्वा। सानूनि स्नूनीत्यादि। सानुः पुंस्यप्यस्ति। सानून् स्नून्। बहुक्रोष्टु। बहुक्रोष्टुनी। शेः सर्वनामस्थानत्वात् 'तृज्वत्

क्रोष्टु' (७. १. ९५) इति तृज्वत्त्वमिति प्रसादे। बहुक्रोष्टूणि। हे बहुक्रोष्टो, हे बहुक्रोष्टु। टादिषु वा पुंवत्त्वम्। पुंवत्त्वपक्षे तृज्वत्त्व-विकल्पः। क्लीबपक्षे टाद्युक्ततृज्वत्त्वात् पूर्वं नुमेवेष्ट इति नुमि कृते पुनर्न तृज्वत्त्वम्। बहुक्रोष्ट्रा, बहुक्रोष्टुना। अत्र नात्वे नुनि च न भेदः। बहुक्रोष्ट्रे, बहुक्रोष्टवे बहुक्रोष्टुने इत्यादि। आमि बहुक्रोष्टूनाम्॥

धातृ। धातृणी। हे धातः हे धातृ। टादौ धात्रा धातृणे त्यादि।

उपगोस्समासजातो ह्रस्वोऽत उदन्त एव मृदुवदयम्।
सुधोस्तु लिङ्गजोऽसौ स्वभावजो नेति सोऽप्यमोदन्तः॥

क्लीबह्रस्वे कृते सुद्यु सुद्युनी चैवमा शसः।
टादौ त्वेजन्तशब्दानां पुंवत्त्वं नेति माधवः॥

इगन्तस्योक्तपुंवत्त्वं नह्येजन्ते नपुंसके
कृते ह्रस्वे नोक्तपुंस्कमकृते न त्विगन्तता॥

कौमुद्यां त्वेषां पुंवत्त्वोक्तिश्चिन्त्या, सुद्यु सुद्युनी, सुद्यूनि। हे सुद्यो, हे सुद्यु। सुद्युना सुद्युभ्यामित्यादि। आमि सुद्यूनाम्। अतिरैश-ब्दस्य—अतिरि। अतिरिणी। अतिरीणि। अतिरिणा। एकदेशविकृत-स्यानन्यत्वात् 'रायो हलि' (७. २. ८५) इत्यात्वम्। अतिरा-भ्याम्। अतिरि आम्। नुटि कृते हलादित्वादात्वम्। अतिराणाम्। एवं सुनौशब्दस्य सुनु, सुनुनी, सुनुनेत्यादि॥

## अणोऽप्रगृह्यस्यानुनासिकः (८. ४. ५७)

अप्रगृह्यस्याणोऽवसाने अनुनासिको वा स्यात्। सुँ, वारिँ गोपीँ कृष्णाँ, इत्यादि। विकल्पाद्ययास्थितमपि। अप्रगृह्य-ग्रहणात्पुनरोहरी विष्णू इत्यादौ न॥

इत्यजन्तक्लीबाः॥

---

१ 'नी' । 'नूनी' । हे' ख. 'उक्तं' २. 'ना, स्युने क्रमुक्ता'
४. 'नौ सुनूनि सुन्ने' इति केरलमर्यादिपाठः।

## अथ हलन्तपुंल्लिङ्गाः

मधुलिह् स् । हल्ङ्यादिना सुलोपः । 'हो ढः' (८. २. ३१) इति ढः । जश्त्वं, वा चर्त्वं च सर्वहलन्तेषूह्यम् । मधुलिट्, मधुलिड् । असमासे यरो द्वित्वं वाच्यमित्यनयोर्द्वित्वमप्यूह्यम् । मधुलिहौ । मधुलिहः । हे मधुलिट् । मधुलिहमित्याद्यजादावविकारः । मधुलिड्भ्यामित्यादौ पदत्वाड्ढत्वजश्त्वे । मधुलिट्सु इत्यत्र 'खरि च' (८. ४. ५५) इति चर्त्वम् । गोदुह् स् । सुलोपे 'दादेर्धातोर्घः' (८. २. ३२) 'एकाचो बशः—' (८. २. ३७) इति भष्भावः । जश्त्व-चर्त्वे । गोधुक् । गोदुहौ । जश्त्वावधि कृते गोधुग्भ्याम् । चर्त्वपक्षे गोधुक्षु । 'वा द्रुह—' (८. २. ३३) इति वा घः । जश्त्वम् वा चर्त्वम् । कंसध्रुक्, कंसध्रुग्, कंसध्रुट्, कंसध्रुड्, कंसद्रुहौ । कंसध्रुग्भ्याम् । कंसध्रुड्भ्यां कंसध्रुक्षु । कंसध्रुट्त्सु । एवं प्रमुक् । प्रमुगित्यादि । विश्ववाट् । विश्ववाहौ । शसादौ भस्य 'वाह ऊठ्' (६. ४. १३२) विश्वऊह् अस् । 'एत्येधत्यूठ्सु—' (६. १. ८९) इति वृद्धिः । विश्वौहः । विश्वौहा । विश्ववाड्भ्यामित्यादि । भूवाडित्यस्य भस्य ऊठि सवर्णदीर्घः । अवर्णाभावान्न वृद्धिः । भूहः । भूहा । भूवाड्भ्याम् । अनडुह् स् —

### चतुरनडुहोरामुदात्तः (७. १. ९८)

अनयोः सर्वनामस्थाने परे उदात्त आम् स्यात् । मित्त्वादन्त्यात् पूर्वम् । अनड्वाह् स् ।

### सावनडुहः (७. १. ८२)

अस्य सौ आमो नुम् स्यात् । अनड्वान्ह् स । सुलोपः । संयोगान्तलोपः । संयोगान्तलोपस्यासिद्धत्वान्न नलोपो न । अनड्वान् । अनड्वाहौ । अनड्वाहः ।

### अम् सम्बुद्धौ (७. १. ९९)

चतुरनडुहोः सम्बुद्धावम् स्यात् । प्रागन्तुमादि । हे अनड्वन् । अनड्वाहम् । अनड्वाहौ । अनडुहः । अनडुहा ।

### वसुस्रंसुध्वंस्वनडुहां दः (८. २. ७२)

सान्तस्य वसोः स्रंस्वादेश्च पदान्ते दः स्यात् । अनडुद्भ्याम् । अनडुद्भिः । अनडुत्सु । सान्तस्य वसोर्दत्वोक्तिर्विद्वानित्यादौ नस्य दत्वाभावार्थम् । आमादिविधौ तदन्तविधिरिष्टः । प्रियानड्वान् , प्रियानड्वाहावित्यादि । तुराषाहस्तु पदत्वाज्जशत्वे 'सहेः साडः सः' (८.३.५६) इति षः । तुराषाट्, तुराषाड् । अन्यत्र न । तुरासाहौ । तुरासाहः । तुरासाहा । तुराषाड्भ्याम् । तुराषाट्सु । सुदिव् स् ।

### दिव औत् (७. १. ८४)

दिवः सौ परेऽन्त्यस्यौ स्यात् । स्थानिवत्त्वेन 'हल्ङ्याब्भ्यो दीर्घात्—' (६ १ ६८) इति सुलोपे प्राप्ते हल्निमित्तत्वेनालाश्रयविधित्वान्न स्यात् । सुद्यौः । सुदिवौ । सुदिवः । हे सुद्यौः । 'दिव उत्' (६. १. १३१) इति पदान्त उत् । सुद्युभ्याम् । सुद्युषु । चतुरो जस्याम् । चत्वारः । चतुरः चतुर्भिः । चतुर्भ्यः । चतुर् आम् ।

### षट्चतुर्भ्यश्च (७. १. ५५)

षट्संज्ञेभ्यश्चतुरश्च परस्यामो नुट् स्यात् । चतुर्णाम् । चतुर् सु ।

### रोस्सुपि (८. ३. १६)

सप्तमीबहुवचने रोरेव विसर्गः स्यान्नान्यरेफस्य । षत्वम् । 'अचो रहाभ्याम् —' (८. ४. ४६) इति षस्य द्वित्वे प्राप्ते —

### शरोऽचि (८. ४. ४९)

अचि परे शरो द्वित्वं न । चतुर्षु । हलि परे त्वीर्ष्ष्यतीत्यादौ[1] द्वित्वमेव । तदन्तविधावपि प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः । हे प्रियचत्वः । प्रियचत्वारम् । प्रियचत्वारौ । प्रियचतुरः । प्रियचतुरा । प्रियचतुर्भ्याम् । उपसर्जनत्वे नुण्नेष्टः । प्रियचतुराम् । प्राधान्ये स्यादेव । परमचतुर्णाम् । प्रतमः क्विपि दीर्घे प्रताम् । सौ

---

१. 'त्वीर्ष्ष्यैत्यादौ' इति केरलवर्मदेवपाठः.

कृते लुप्ते 'मो' नो धातोः (८. २. ६४) इति नत्वम् । नत्वस्यासिद्धया नलोपो न । प्रतान् । प्रतामौ । प्रतामः । हे प्रतान् । प्रतामा । पदत्वान्नः । प्रतान्भ्याम् । प्रतान्भिः । प्रतान्सु । प्रशाम्शब्दस्यापि सावजादिषु चैवम् । भ्यामादौ तु पदत्वेन नत्वे प्रशानित्यस्य स्वरादिपाठात् सुब्लुकि प्रशानित्येव रूपम्[1] । किमो विभक्तौ कादेशे कृते सर्ववत् । कः, कौ, के । कं, कौ, कानित्यादि ।

साकचोऽपि किमः कोक्तेः पुंस्त्रियोर्नास्त्यकच्छ्रुतिः ।
क्लीबे स्वमोस्त्वस्ति कार्कि समासेऽपि कर्किकृतः ॥

इदम् स् । त्यदाद्यत्वे प्राप्ते,

## इदमो मः (७. २. १०८)

सौ परे इदमो मस्य म एव स्यात् ।

## इदोऽय् पुंसि (७. २. १११)

सौ परे इदम इद् इत्यस्य अय् स्यात् । सुलोपः । अयम् । त्यदाद्यत्वे कृते इद अ औ । 'अतो गुणे' (६. १. ९७) इद औ ।

## दश्च (७. २. १०९)

सुपि परे इदमो दस्य मः स्यात् । इमौ । त्यदाद्यत्वे मत्वे च कृते अदन्तसर्वनामत्वाज्जसः शी । इमे । हे स इति वृत्त्युक्तेरेषामपि सम्बोधनमस्ति । हे अयम्, हे इमावित्यादि । इमम्, इमौ, इमान् ॥

## अनाप्यकः (७. २. ११२)

आबिति टादिसुबुक्तः । अककारस्येदम आपि परे इदोऽन् स्यात् । अनेन ॥

## हलि लोपः (७. २. ११३)

हलादावाप्यककारस्येदम इदो लोपः स्यात् । आभ्याम् ।

---

1, अत्र केरलवर्मदेवटिप्पणी—'सिद्धान्तकौमुद्यां प्रशान्भ्यामित्येवोदाहृतम् । प्रशानितिवत् प्रतीम् प्रतान् इत्यनयोरपि स्वरादिपाठात् प्राप्तः सुब्लुगेतत्पक्षे केन वार्यताम् । अव्ययप्रकरणेऽनयोरनुक्तावप्यन्यग्रन्थेषु पाठो दृश्यत एव । प्रशानित्यस्य स्वरादिपाठेऽप्यर्थभेदान्नाव्ययत्वमिति कण्ठरवेणोक्तं शब्देन्दुशेखरे । एवं स्थिते कतरः पक्षो माह्य इत्यत्र लेखकमात्रेण मया मूकेनेव शरणीकरणीयेत्यलम्' इति ।

## आद्यन्तवदेकस्मिन् (१. १- २१)

एकस्मिन्वर्णेऽप्यादिवदन्तवच्च कार्यं स्यात् । इत्यदन्तकार्यं 'सुपि च' (७. ३. १०२) इति दीर्घः । आभ्याम् ।

## नेदमदसोरकोः (७. १. ११)

अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एत्वम् । एभिः । ङेः स्मैत्वे इदो लोपः । अस्मै । आभ्याम् । एभ्यः । एवम् अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन्, अनयोः, एषु । ककारयोगे तु – इमकेन, इमकाभ्याम्, इमकैरित्यादि । अकाचि 'दश्च' (७. २. ७५) इति मः ॥

## द्वितीयाटौस्स्वेनः (२. ४. ३४)

द्वितीयायां टायामोसोश्च परेष्वन्वादेशार्थयोरिदमेतदोरनुदात्त एनादेशः स्यात् । उक्तस्यार्थस्य पुनरुक्तिरन्वादेशः । 'कृष्णो वने क्रीडति' पश्यैनम् ।

निर्देशमात्रं प्राग्वाक्ये न किञ्चिद्विहितं यदि ।
तदान्वादेशता न स्यात् कृष्णोऽसाविममर्चय ॥

एवम् एनौ । एनान् । एनेन । एनयोः । एनयोः । भ्यामादौ त्वन्वादेशे साकचोऽप्याभ्यामित्येव स्यात् । 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (२.४. ३२) इत्यशूभावात् ॥

राजन् स् । 'सर्वनामस्थाने च--' (६-४-८) इति दीर्घः । सुलोपनलोपौ । राजा । राजानौ । राजानः ॥

## न ङिसंबुद्ध्योः (८. २. ८)

ङौ सम्बुद्धौ च नलोपो न । हे राजन् ! ङौ तु छान्दसे ङिलोप आत्मन्नित्याद्युदाहरणम् ।

ङौ नलोपनिषेधोऽयं नतूत्तरपदे परे ।
तेन नर्माणि लोलेयं नर्मलोलेति लुप्यते ॥

---

१. कच्यप्याभ्यामित्याद्येव केरळवर्मदेवपाठः.

भत्वेऽल्लोपचुत्वे । राज्ञः, राज्ञा, राजभ्यामित्यादि । ङौ राज्ञि, राजनि । एवं यज्वा । यज्वानौ ॥

### न संयोगाद्वमन्तात् (६. ४. १३७)

वकारमकारान्तात् संयोगाद् अनोऽल्लोपो न । यज्वनः, यज्वना । एवं ब्रह्मणः, ब्रह्मणेत्यादि । वृत्रहन् स्,

### इन्हन्पूषार्यम्णां शौ (६. ४. १२)

इन्नन्तानां हन्नादीनां च शावेवोपधादीर्घः स्यान्नान्यत्र ॥

### सौ च (६. ४. १३)

असम्बुद्धौ सौ तु स्यात् । वृत्रहा । वृत्रहणौ । वृत्रहणः । इह 'एकाजुत्तरपदे–' (८. ४. १२) इति णः । हे वृत्रहन् । वृत्रहणम् । वृत्रहणौ । भत्वेऽल्लोपो घत्वं च ॥

### हन्तेरत्पूर्वस्य (८. ४. २२)

हन्तेरकारपूर्वस्यैव नस्य णत्वं नान्यस्य । वृत्रघ्नः, वृत्रघ्नेत्यादि । माधवस्त्वत्र नियममनाश्रित्य प्रातिपदिकान्तत्वाद् वा णत्वमाह । तेन वृत्रघ्णः वृत्रघ्णेत्याद्यपि । भ्यामादौ नलोपे कृते ह्रस्वान्तत्वात् क्विबाश्रये तुकि प्राप्ते 'नलोपः सुप्स्वर––' (८. २. २) इति कृन्निमित्ते तुकि नलोपस्यासिद्धत्वान्न स्यात् । वृत्रहभ्याम् । वृत्रहभिः । एवं करिन्नर्यमन्पूषन्नाद्याः । पूष्णि, पूषणि । पूष्णो ङिर्डिर्वेति वोपदेवोक्त्या ङौ टिलोपोऽपीति कौमुदी । पूषि । मघवन् स् । 'मघवा बहुलम्' (६, ४. १२८) इति तृत्वम् । मघवत् स् । उगित्वान्नुम् । मघवन्त् स् । सुलोपसंयोगान्तलोपौ । 'मघवा बहुलम्' (६. ४. १२८) इति बहुलोक्तेः असम्बुद्धौ सौ दीर्घः मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवन्तम् । मघवन्तौ । मघवतः । मघवता । मघवद्भ्याम् । मघवत्सु । तृत्वाभावे राजवत् । मघवा, मघवानौ । भत्वे प्रसारणम् । मघोनः, मघोनेत्यादि । एवं शुनः, शुना श्वभ्याम् । युवन्शब्दस्य प्रसारणे कृते युउन् अस् । पुनर्यकारस्य प्रसारणे प्राप्ते–

न सम्प्रसारणे सम्प्रसारणम् (६. १. ३७)

सम्प्रसारणे परे पूर्वस्य यणः सम्प्रसारणं न। उतोऽस्सवर्णदीर्घः यूनः। यूना। युवभ्याम्। अर्वा॥

अर्वणस्त्रसावनञः (६. ४. १२७)

नञ्वर्जितस्यार्वणोऽङ्गस्य तृ स्यात्, सौ तु न। अर्वन्तौ। अर्वन्तः। हे अर्वन्। अमादौ मघवन्तमित्यादिवत्। नञ्योगे तृत्वं न। अनर्वा, अनर्वाणावित्यादि यज्ववत्। पथिन् स्।

पथिमथ्यृभुक्षामात् (७. १. ८५)

एषां सौ परे अन्तादेश आत् स्यात्। पथिआ स्।

इतोऽत्सर्वनामस्थाने (७. १. ८६)

सुटि पथ्यादीनाम् इतोऽत् स्यात्। सवर्णदीर्घः पथा स्।

थो न्थः (७. १. ८७)

सुटि पथिमथोः थस्य न्थः स्यात्। अकार उच्चारणार्थः। पन्थाः। हे पन्थाः। पथिन् औ। इतोऽत्। थो न्थः। पन्थन् औ 'सर्वनामस्थाने च—'(६.४.८) इति दीर्घः। पन्थानौ। पन्थानः। पन्थानम्॥

भस्य टेर्लोपः (७. १. ८८)

भस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा। पथिभ्याम्। पथिषु। एवं मन्थाः, ऋभुक्षाः इत्यादि। पञ्चन् जस्। नान्तस्य संख्यात्वात् षट्त्वे 'षड्भ्यो लुक्' (७. १. २२) इति जश्शसोर्लुक्। नलोपः। पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। आमि 'षट्चतुर्भ्यश्च' (७. १. ५५) इति नुट्। पञ्चन् नाम्।

नोपधायाः (६. ४. ७)

नामि नान्तस्योपधाया दीर्घः स्यात्। पदत्वान्नलोपः। पञ्चानाम्। पञ्चसु। उपसर्जनत्वे तु लुङ्नुटौ न। प्रियपञ्चा। प्रिय

पञ्चानौ । प्रियपञ्चानः । भत्वे प्रियपञ्च्नः । प्रियपञ्च्ना । सर्वं राजवत् । प्राधान्ये लुङ्नुटौ स्तः । परमपञ्च । परमपञ्चानाम् । 'अष्टन आ विभक्तौ' (७. २. ८४) इति नस्यात्वम् । अष्टा जस् ।

अष्टाभ्य औश् (१. ७. २१)

कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् । अष्टौ । अष्टौ अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । षट्त्वान्नुट् । अष्टानाम् । अष्टासु । आत्वं वेष्टम् । तेन अष्ट, अष्ट, इति पञ्चवत् । उपसर्जनत्वे प्रियपञ्चवत् तत्रात्वं वेति रामहरौ । प्रियाष्टाः । प्रियाष्टौ । जश्शसोरौश्त्वात् प्रियाष्टौ । उपसर्जनत्वादामि न नुट् । प्रियाष्टाम् । शेषं हाहावत् । भान्तः अतिककुप्, अतिककुभावित्यादि । धान्तः बुधेः क्विप् बुध् स् । सुलोपः । भष्भावजश्त्वचर्त्वानि । भुत्, भुद् । बुधौ । बुधः । बुधा । बुद्भ्याम् । भुत्सु । युज् स् । 'युजेरसमासे' (७. १. ७१) इति नुम् । सुलोपे संयोगान्तलोपे च 'क्विन्प्रत्ययस्येति [1]स्य)कुः' (८. २. ६२) इति नस्य कुत्वम् । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ । युञ्जः । युञ्जम् । युञ्जौ । युजः । युजा । युग्भ्याम् । युक्षु । समासे तु न नुम् । कृष्णयुज् क्विन्नन्तः । क्विन्प्रत्ययवतो धातोरन्यत्रापि पदत्वे कुत्वोक्तेः कुः । चर्त्वम् । कृष्णयुक् । कृष्णयुजौ । समाध्यर्थयुजे-र्नुम्नष्टः । युक् समाधिमान् । युजौ । युजः । विश्वसृज् । स्रगिति सृजेः क्विन्प्रत्ययवत्त्वात् कुत्वम् । विश्वसृक् । कुत्वं नेति च वृत्तौ । व्रश्चादिषः । जश्त्वचर्त्वे । विश्वसृट् विश्वसृजौ । विश्वसृग्भ्याम् । विश्वसृड्भ्याम् । व्रश्चादिषत्वे राट् । राजौ । राड्भ्याम् । द्वौ भ्राजती, तत्र राजत्यनन्तरपठितस्यैव व्रश्चादिषः । अन्यस्य चोः कुः । विभ्राट्, विभ्राक् । विभ्राड्भ्यां, विभ्राग्भ्याम् । 'परौ व्रजेः षः पदान्ते' इत्युणादिसूत्रात् क्विब्दीर्घौ पदान्तेषु षत्वं च । परिव्राट् । परिव्राजौ । परिव्राड्भ्याम् । ऊर्ज् ।

रात् सस्य (८. २. २४)

[3]रात्परस्य सस्यैव संयोगान्तलोपः स्यात् । इति जस्य लोपा

१. 'थस्य युजे' २. 'षश्च पदा' इति केरलवर्मदेवपाठः. ३. 'रात्सस्यैव' ग. पाठः.

भावः । चोः कुः । ऊक् । ऊर्जौ । ऊर्ग्भ्यामित्यादि । तद् स् । त्यदाद्यत्वम् । 'अतो गुणे' (६. १. ९७) । तस् ।

तदोः सः सावनन्त्ययोः (७. २. १०६)

त्यदादेरनन्त्ययोस्तकारदकारयोः सौ परे सः स्यात् । सः । तौ । ते । हे स, हे तौ इत्यादि सर्ववत् । एवं स्यः । त्यौ । त्ये[२] । यः । यौ । ये । एतदः सत्वे आदेशसत्वात् षः । एषः, एतौ, एते इत्यादि । अन्वादेशे तु 'द्वितीयाटौस्वेनः' (२. ४. ३४) एनमित्यादि इदंवत् । उपसर्जनत्वे त्यदाद्यत्वं न । प्रियः सोऽस्येति प्रियतत् । प्रियतदौ । प्राधान्ये त्वत्वं स्यात् । परमसः । परमतौ । परमते । 'एतत्तदोः—' (६. १. १३२) इति सुलोपोऽपि प्राधान्ये स्यात् । महास याति परमैष वन्द्यः ॥

युष्मदस्मदोर्दान्तयोः लिङ्गत्रये समं रूपम् । युष्मद् स् अस्मद् स

ङे प्रथमयोरम् (७. १. २८)

युष्मदस्मद्भ्यां परस्य ङेशब्दस्य प्रथमाद्वितीययोरप्यमादेशः स्यात् । 'मपर्यन्तस्य' (७. २. ९१) इत्यधिकारे—

त्वाहौ सौ (७. २. ९४)

युष्मदस्मदोर्मकारपर्यन्तस्य सौ परे त्वाहौ स्तः । त्वअद् अम् । अहअद् अम् ।

शेषे लोपः (७. २. ९०)

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यलोपः स्यात् । त्वअ अम् । अहअ अम् । 'अतो गुणे' (६. १. ९७) 'अमि पूर्वः' (६. १. १०७) त्वम् । अहम् ॥

युवावौ द्विवचने (७. २. ९२)

द्व्यर्थवाचिनी ये युष्मदस्मदी तयोर्मपर्यन्तस्य युवावौ स्तः ।

---

२. 'स्ये । हे स्य । यः' केरलवर्मदेवपाठः.

## प्रथमायाश्च द्विवचने भाषायाम् (७. २. ८८)

प्रथमाद्विवचने परे युष्मदस्मदोर्लोकेऽन्तादेश आत् स्यात्। युवअआ अम्[1]। 'अतो गुणे' (६. १. ९७) सवर्णदीर्घः। 'अमि पूर्वः' (६. १. १०७) युवाम्। आवाम्। भाषायामात्वोक्तेश्छन्दसि शेषेलोपपररूपत्वयोर्युवम्। मपर्यन्तस्य युवाद्युक्तिर्मकारात् परस्याकचः श्रवणार्थम्। युवकाम्। आवकाम्॥

## यूयवयौ जसि (७. २. ९३)

अनयोर्मपर्यन्तस्य जसि यूयवयौ स्तः। 'शेषे लोपः'(७-२-९०) 'अतो गुणे' (६- १- ९७) 'अमि पूर्वः (६-१-१०७) यूयम्। वयम्।

## त्वमावेकवचने (७. २. ९७)

एकार्थवाचिनोरनयोर्मपर्यन्तस्य सुपि त्वमौ। त्वअद् अम् मअद् अम्।

## द्वितीयायां च (७. २. ८७)

अनयोर्द्वितीयायां परतः आत् स्यात्। शेषमौवत्। त्वाम्। माम्। युवाम्। आवाम्॥

## शसो नः[2] (७. १. २९)

आभ्यां परस्य शसो नत्वं स्यात्। अमोऽपवादः। 'आदेः परस्य' (१-१-५४) इत्यकारस्य। युष्मान् स्। अस्मान् स्। संयोगान्तलोपः युष्मान्। अस्मान्॥

## योऽचि (७. २. ८९)

अनयोरनादेशरूपेऽजादौ सुपि यकारोऽन्तादेशः स्यात्। त्वया। मया॥

---

१. 'अम्॥ आवअआ अम् अतो' करलबर्मदेवपाठः २. 'न' इति विसर्गरहितं सूत्रं सर्वत्र पठ्यते.

युष्मदस्मदोरनादेशे (७. २- ८६)

अनयोरनादेशे हलादौ सुपि पर आत् स्यात् । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः । 'ङे प्रथमयोः –' (७. १. २ ८) इत्यम् ।

तुभ्यमह्यौ ङयि (७. २. ९५)

अनयोर्मपर्यन्तस्य ङय्येतौ स्तः । 'शेषे लोपः' (७- २- ९०) तुभ्यम् । मह्यम् । युवाभ्याम् । आवाभ्याम् ॥

भ्यसोऽभ्यम् (७. १. ३०)

आभ्यां परस्य भ्यसोऽभ्यम् स्यात् । 'शेषे लोपः (७. २. ९०) पररूपम् । युष्मभ्यम् । अस्मभ्यम् । भ्यमि कृते 'बहुवचने झल्येत्' (७. ३. १०३) इत्येत्वं दुस्त्यजमित्यभ्यमुक्तः ।

एकवचनस्य च (७. १. ३२)

आभ्यां परस्य पञ्चम्येकवचनस्य अदादेशः स्यात् । शेषे लोपे द्विः पररूपम् । त्वत् । मत् । युवाभ्याम् । आवाभ्याम् ॥

पञ्चम्या अत् (७. १. ३१)

आभ्यां परस्य पञ्चम्या भ्यसोऽत् स्यात् । युष्मत् । अस्मत् ।

तवममौ ङसि (७. २. ९६)

अनयोर्मपर्यन्तस्य ङसि तवममौ स्तः ।

युष्मदस्मद्भ्यां ङसोऽश् (७. १. २७)

आभ्यां परस्य ङस अश् स्यात् । शित्त्वात् सर्वस्य । 'शेषे लोपः'(७-२-९०) पररूपम् । तव मम । 'योऽचि' (७-२-८९) युवयोः । आवयोः । आमि —

साम आकम् (७. १. ३३)

आभ्यां परस्य सुट्वतः आम आकं स्यात् । शेषे लोपे युष्मा-

कम्। अस्माकम्। यत्वे त्वयि। मयि। युवयोः। आवयोः। हस्वात्वम्। युष्मासु। अस्मासु।

एवमेवानयोः सिद्धिः समासेऽपि प्रधानयोः।
परमाहं पापयुवां महायूयमितीदृशी॥

अप्रधाने त्रिधा तत्र प्रकृते युष्मदस्मदोः।
समासार्थेऽन्यसंख्येऽपि युवावौ स्तस्त्वमावपि॥

तयोर्बह्वर्थतायां तु स्वरूपश्रुतिरेव हि।
आत्वयत्वादिसूत्रकार्यं त्रिषु मार्गेष्वपीष्यते॥

सुजसङेङस्सु सर्वत्र त्वाहौ यूयवयौ तथा।
तुभ्यमह्यौ तवममावित्यादेशा व्यवस्थिताः॥

प्रियस्त्वमहं वा यस्येत्यत्र प्रियत्वम्। प्रियाहम्। दस्यात्वम्। प्रियत्वाम्। प्रियमाम्। प्रिययूयम्। प्रियवयम्। अमौटोः प्रियत्वाम्। प्रियमाम्। शसि प्रियत्वान्। प्रियमान्। प्रियत्वया। प्रियमया। प्रियत्वाभ्याम्। प्रियमाभ्याम्। प्रियत्वाभिः। प्रियमाभिः। प्रियतुभ्यम्। प्रियमह्यम्। प्रियत्वाभ्याम्। प्रियमाभ्याम्। प्रियत्वभ्यम्। प्रियमभ्यम्। प्रियत्वत्। प्रियमत्। प्रियत्वाभ्याम्। प्रियमाभ्याम्। प्रियत्वत्। प्रियमत्। प्रियतव। प्रियमम। प्रियत्वयोः। प्रियमयोः। प्रियत्वाकम्। प्रियमाकम्।

उपसर्जनभूतानां सर्वनामत्ववारणात्।
सुडमात्रात् साम आकं नेत्येक इति कौमुदी॥

'योऽचि' (७.२.८९) प्रियत्वयाम्। प्रियमयाम्। प्रियत्वयि। प्रियमयि। प्रियत्वयोः। प्रियमयोः। प्रियत्वासु। प्रियमासु। एवमतित्वम्। अत्यहमित्यादावपि। प्रियौ युवामावां वा यस्येत्यत्रापि सुजसङेङस्सु प्राग्वत्। प्रियत्वम्। प्रियाहम्। प्रिययुवाम्। प्रियावाम्। प्रिययूयम्। प्रियवयम्। अमौटोः प्रिययुवाम्। प्रियावाम्। प्रिययुवान्। प्रियावान्। प्रिययुवया। प्रियावया। प्रिययुवाभ्याम्। प्रियावाभ्याम्।

प्रिययुवाभिः । प्रियावाभिः । प्रियतुभ्यम् । प्रियमह्यम् । प्रिययुवाभ्याम् । प्रियावाभ्याम् । प्रिययुवभ्यम् । प्रियावभ्यम् । प्रिययुवत् । प्रियावत् । प्रिययुवाभ्याम् । प्रियावाभ्याम् । प्रिययुवत् । प्रियावत् । प्रियतव । प्रियमम । प्रिययुवयोः । प्रियावयोः । प्रिययुवाकम् । प्रियावाकम् । मतान्तरे । प्रिययुवयाम् । प्रियावयाम् । प्रिययुवयि । प्रियावयि । प्रिययुवयोः । प्रियावयोः । प्रिययुवासु । प्रियावासु । प्रिया यूयं वयं वा यस्येति बहुत्वेऽपि सुजम्ङेङस्सु प्राग्वत् । अमौट्सु । प्रिययुष्माम् । प्रियास्माम् । शसि प्रिययुष्मान् । प्रियास्मान् । प्रिययुष्मया । प्रियास्मया । प्रिययुष्माभ्याम् । प्रियास्माभ्याम् । प्रिययुष्माभिः । प्रियास्माभिः । प्रियतुभ्यम् । प्रियमह्यम् । प्रिययुष्माभ्याम् । प्रियास्माभ्याम् । प्रिययुष्मभ्यम् । प्रियास्मभ्यम् । ङसिभ्यसोरत् । प्रिययुष्मत् । प्रियास्मत् । प्रियतव । प्रियमम । प्रिययुष्मयोः । प्रियास्मयोः । प्रिययुष्माकम् । प्रियास्माकम् । मतान्तरे प्रिययुष्मयाम् । प्रियास्मयाम् । प्रिययुष्मयि । प्रियास्मयि । प्रिययुष्मासु । प्रियास्मासु ॥

पदस्य (८. १. १६)

पदात् (८. १. १७)

अनुदात्तं सर्वमपादादौ (८. १. १८)

इत्यधिकाराः । तत्र—

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयो-
र्वान्नावौ (८. १. २०)

पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिद्विवचनान्तयोः पदभूतयोर्युष्मदस्मदोः अनुदात्तौ वां नौ इत्यादेशौ स्तः ॥

बहुवचनस्य वस्नसौ (८. १. २१)

उक्तप्रकारयोः षष्ठ्यादिबहुवचनान्तयोरनयोर्वस् नस् इति स्तः ॥

१. 'ततस्य पदं' कर [illegible]

तेमयावेकवचनस्य (८. १. २२)

तादृशोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे इति स्तः ।

त्वामौ द्वितीयायाः (८. १. २३)

तादृशोरनयोर्द्वितीयैकवचनान्तयोः त्वा मा इति स्तः ।

कृष्णस्त्वावतु मापीह दत्तां ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वां नावपि प्रभुः ॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
पातु वो नो मुकुन्दोऽसौ सुखं वो नो ददात्वयम् ॥
त्राता वो नः स कंसारिरित्येवमुदाहृतिः ।

स्थग्रहात् विभक्तिलोपे न । युवयोः पुत्रः युष्मत्पुत्रः । अत्र वां पुत्र इति न । पदात् परयोरित्युक्तेरादावेव न । त्वां पातु ।

पादादावपि नो शौरिरस्माकं कुलदैवतम् ।
वाक्यादावपि नैवेष्टं हे कृष्ण जय मामव ॥

अत्र मावेति मादेशाभावः ॥

सामन्त्रितम् (२. ३. ४८)

सम्बोधनप्रथमा आमन्त्रितसंज्ञा ॥

आमन्त्रितं पूर्वमविद्यमानवत् (८. १. ७२)

सम्बोधनमादिभूतमसद्वत्स्यात् । तेन तत्पूर्वस्य पदात्परत्वं न । कृष्ण त्वां नमामि ॥

नामन्त्रिते समानाधिकरणे सामान्यवचनम् (८. १. ७३)

समानाधिकरणे सम्बोधने परे विशेष्यं सम्बोधनमसद्वद्व न स्यात् ।

कृष्ण बालक मा पाहीत्यत्र कृष्णेति सद्भवेत् ।
अविशेषितरूपत्वात् कृष्णः सामान्यवाचकः ॥

एते वांनावादयोऽनन्वादेशे वा वाच्याः । अन्वादेशे तु नित्यम् ।

अहं ते तव वास्मीश वस्मै ते हरये नमः ।

न चवाहाहैवयुक्ते (८. १. २४)

चादिपञ्चकयोगे वांनावादयो न स्युः ॥

आवयोर्युवयोश्चेशस्तव वा मम वा हरिः ।
तव हासौ मम ह स स्फुटं मामेव रक्षतु ॥

अहशब्दश्चान्तर्हसि । एभिः साक्षाद्योगेऽयं निषेधः । युक्तयुक्ते तु न निषेधः । हरिश्च मे स्वामी । अत्र हरेरेव चयोगः ॥

पश्यार्थैश्चानालोचने (८. १. २५)

पश्यो ज्ञानम् । अदर्शनार्थैर्ज्ञानार्थैर्धातुभिर्योग एते न स्युः । चेतसा त्वां समीक्षते । अत्र युक्तयुक्तेऽपि निषेधः । भक्तस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ॥

सपूर्वायाः प्रथमाया विभाषा (८. १. २६)

प्राक्पदयुक्तात्प्रथमान्तात्परयोर्युष्मदस्मदोर्वांनावादयो वा स्युः । तेन कृष्णो मे मम वा रक्षिता । अत्रान्वादेशेऽपि विकल्पः फलम् । अन्यत्र वक्तव्येन विकल्पोक्तेः ॥

अस्मदो द्वयोश्च (१. २. ५९)

द्वित्व एकत्वे चास्मदो वा बहुवचनं स्यात् ॥

अहं वन्दे मुकुन्दं तं वयं वन्दामहे यथा ।
आवां वन्दावहे कृष्णं वयमित्यपि पूर्ववत् ॥

विशेषोक्तौ नेति वाच्यम् । अहं नारायणो अस्मि । इति ॥

'संख्यासुपूर्वस्य' (५. ४. १४०) इति पादस्यान्तलोपे सुपात् सुपाद् । सुपादौ । भत्वे 'पादः पत्' (६. ४. १३०) सुपदः । सुपदा । सुपाद्भ्याम् । सम्पादयतीति क्विपि णिलोपे सम्पात् । सम्पादौ । अस्यापि भत्वे पद्भावो भाष्योक्तः । सम्पदः, सम्पदा, सम्पाद्भ्याम् ॥

---

१. 'हेऽस्मदा' केरलवर्मदेवपाठः.

शास्त्रार्थानामुपपदे हितानामापदे नमः।
वाञ्छितानां प्रतिपदे योगिने ज्ञाननिष्पदे ॥

थान्तः-अग्निमत् अग्निमद्। अग्निमथौ। अग्निमद्भ्याम्। प्राच् स्। नुम्संयोगान्तलोपौ। क्विन्नन्तत्वात् कुः। प्राङ्। प्राञ्चौ। प्राञ्चः। भत्वे तु 'अचः' (६. ४. १३८) इत्यल्लोपे 'चौ' (६. ३. १३८) इति दीर्घः। प्राचः। प्राचा। प्राग्भ्याम्। प्राक्षु। एवं प्रत्यङ्। प्रतीचः। प्रत्यग्भ्याम्। तथा। देवद्र्यङ्। देवद्रीचः। देवद्र्यग्भ्याम्। अमुमुयङ्। अमुमुईचः। अमुमुयग्भ्यामित्यादि। तिरस् अच्,

## तिरसस्तिर्यलोपे (६. ३. ९४)

अलुप्ताकारेऽञ्चतौ परे तिरसस्तिरि स्यात्। तिर्यङ्। तिर्यञ्चौ। भत्वे 'अचः' (६. ४. १३८) इत्यल्लोपे तिर्यादेशो न। श्चुत्वम्। तिरश्चः। तिरश्चा। तिर्यग्भ्याम्। पूजार्थस्याञ्चेः क्विन्। प्रान् च्। 'नाञ्चेः पूजायाम्' (६. ४. ३०) इति नलोपाभावः। सौ लुप्ते संयोगान्तलोपे कुत्वम्। प्राङ् पूजयिता। प्राञ्चौ। प्राञ्चः। प्राञ्चम्। प्राञ्चा। प्राञ्चः। प्राञ्चा। संयोगान्तलोपः। कुत्वम्। प्राङ्भ्याम्। प्राङ् सु। 'ङ्णोः कुक्टुक्—' (८. ३. २८) इति वा कुक्। प्राङ्क्षु प्राङ्षु। एवं पूजार्थे प्रत्यङ्दयङादि। कुञ्चेश्च नलोपाभावात् कुङ्। कुञ्चौ। कुञ्चः। कुञ्चा। कुङ्भ्याम्। कुङ्क्षु। 'चोः कुः' (८. २. ३०) पयोमुक्। पयोमुचौ। पयोमुग्भ्याम्। सकारोपधाद् व्रश्चेः क्विपि प्रमाणम्। कंसपरिमृट्। कंसप्रश्च् स्। सुलोपः। 'स्कोः—' (८. २. २९) इति सलोपः। कंसवृच्। व्रश्चादिना चस्य षः। कंसवृष्। जश्त्वचर्त्वे कंसवृट्। सस्य श्चुत्वम्। कंसवृश्चौ। कंसवृश्चः। कंसवृश्चा। कंसवृड्भ्याम्॥

भवत् स्। शतुरुगित्त्वान्नुम्। भवन्त् स्। सुलोपसंयोगान्तलोपौ। भवन्। भवन्तौ। भवन्तः। हे भवन्। शसि भवतः। भवद्भ्याम्। महत् स्। नुमि 'सान्तमहतः—' (६. ४. १०) इति दीर्घः। महान् महान्तौ। महान्तः। असम्बुद्धावेव दीर्घोक्तेः

१. 'नामुपप' ब. पाठ.

हे महन् । महान्तम् । महान्तौ । शेषं भावद्वत् । सर्वादिषु पठितो भवतुशब्द उदित् । त्यदाद्यत्वं द्विपर्यन्तानामिष्टमिति, भवतो न । भवत् स् ।

अत्वसन्तस्य चाधातोः (६. ४. १४)

अत्वन्तस्यासन्तस्य चाधातोरुपधाया असम्बुद्धौ सौ परे दीर्घः स्यात् । भवान् स् । उगित्त्वान्नुम् । भवान् । भवन्तौ । भवन्तः । सम्बुद्धौ हे भवन्निति स्थिते 'विभाषा भवत्—' (पा. सू. वा० ८.३.१) इति वा रुत्वमोत्वं च । हे भोः, हे भवन् । शेषं शत्रन्तवत् । मतोऽत्वन्तत्वात् सौ दीर्घः । श्रीमान् । श्रीमन्तौ । हे श्रीमन्नित्यादि भवद्वत् । ददत् स् ।

नाभ्यस्ताच्छतुः (७. १. ७८)

अभ्यस्तात्परस्य शतुर्नुम् न । ददत् । ददतौ । ददतः ॥

जक्षित्यादयः षट् (६. १. ६)

जक्षिधातुस्तदाद्याश्च षडन्येऽभ्यस्तसंज्ञकाः ।
जक्षिजागृदरिद्राशास्दीधीवेवी[१]ङकारतयः ॥

जक्षत् । जक्षतौ । जक्षतः । एवं जाग्रदित्यादि । दीधीवेवीङौ तु शतृहीनौ ॥

धर्मगुप् । धर्मगुपौ । धर्मगुब्भ्याम् ॥

'क्विन्प्रत्ययस्य कुः' (८. २. ६२) इति शस्य कुत्वे सोऽन्तर-साम्यात् खः । जश्त्वचर्त्वे । तादृक् । तादृशौ । तादृग्भ्याम् । एवं दिविस्पृगादि । विश् स् । क्विबन्तः । सुलोपे व्रश्चादिषः । विट् । विशौ । विड्भ्याम् । नशेः क्विप् । नश् स् ।

नशेर्वा (८. २. ६३)

नशेः पदान्ते वा कुत्वं स्यात् । नक्, नट् । नशौ । नग्भ्याम्, नड्भ्याम् ।

पिदक्षतेः क्विप्यतो लोपः । पिपक्ष् स् । सुलोपः ।

१. 'क्ष' २. धीङ्वे', करलब्धमंदरपाठः.

पिपक्ष् । पचेः सनि कृतस्य 'चोः कुः' (८. २. ३०) इति कुत्वस्य 'स्कोः—' (८. २. २९) इति कलोपं प्रत्यसिद्धत्वात्र कलोपः । संयोगान्तलोपे झलभावात् कुत्वे निवृत्ते पिपच् । पुनः पदान्ते चोः कुः । पिपक् । पिपक्षौ । पिपग्भ्याम् । पिपक्षु । एवं विवक् । विवक्षौ । दहेः सनि दिधक्ष् इत्यत्र 'दादेर्धातोः—' (८. २. ३२) इति घत्वस्यासिद्धत्वात् 'स्कोः—' (८. २. २९) इति लोपाभावे संयोगान्तलोपे घत्वभष्त्वनिवृत्तौ दिदह् । पुनः पदान्ते घत्वभष्त्वजश्त्वचर्त्वानि । दिधक् । दिधक्षौ । विशेः सनि व्रश्चादिषत्वे 'षढोः कः सि' (८. २.४१) इति च कृते विविक्ष् । प्राग्वत् षत्वकत्वयोरसिद्धत्वात् संयोगान्तलोपे षत्वकत्वनाशाद् विविश् । छशां षः । जश्त्वचर्त्वे । विविट् विविक्षौ । तक्षः । क्विपि वृक्षतक्ष् । अत्र ककारस्यानादेशत्वाल्लोपः । वृक्षतष् । जश्त्वचर्त्वे वृक्षतट् । वृक्षतक्षौ । वृक्षतड्भ्याम् । एवं गोरट् । गोरक्षौ । गोरड्भ्याम् । रक्षेः कलोपो नेति मुग्धबोधे । संयोगान्तलोपः । गोरक् । गोरग्भ्याम् । धृषेर्निपातनात् क्विन् । दधृक् । दधृषौ । दधृग्भ्याम् । क्विन्प्रत्ययवत्त्वात् क्विप्यपि कुत्वम् । कंसधृक् । कंसधृषौ । कंसधृग्भ्याम् । जश्त्वचर्त्वे । क्षीरमुट् । क्षीरमुषौ । सह जुषते भोगानिति 'सहस्य सः संज्ञायाम्' (६. ३. ७८) इति सत्वे सख्यर्थः सजुष् शब्दः । 'ससजुषो रुः' (८. २. ६६) । धातुतया 'र्वोः—' (८. २. ७६) इति दीर्घः । सजूः । सजुषौ । सजुषः । हे सजूः । सजुषम् । सजुषा । सजूर्भ्याम् । सजूर् सु । 'वा शरि' (८. ३. ३६) वा विसर्गः सत्वं च । सजूस्सु सजूःसु ।

## नुम्विसर्जनीयशर्व्यवायेऽपि (८. ३. ५८)

एष्वेकेन व्यवधानेऽपीण्कुभ्यां परस्य सस्य षः स्यात् । सत्वे शर्व्यवायः । सजूस्षु । ष्टुः सजूष्षु । अन्यत्र विसर्गव्यवायः सजूःषु । षष् जस् । 'षड्भ्यो लुक्' (७. १. २२) इति जश्शसोर्लुक् । जश्त्वचर्त्वे । षट् । षड् । षड्भिः षड्भ्यः । 'षट्चतुर्भ्यश्च' (७. १. ५५) इति नुटि 'यरः—' (८. ४. ४५) इति वानुनासिकः । षण्णाम् । षड्णाम् । षट्सु । उपसर्जनत्वे लुङ्नुटौ न । प्रियषट् । प्रियषषौ । प्रियषषः । प्रियषषाम् । पिपठिषिश्चिकीर्षोः सकारकार्यवत्त्वात् सान्तानु-

1. 'तिक्विप 'दह'— ' केरलवर्मदेवपाठः

प्रवेशः । पिपठिषतेः क्विपि पिपठिष् स । सुलोपः । रुत्वे प्रति सनः षत्वस्यासिद्धत्वेन सान्तत्वाद् रुः । पिपठिर् । 'र्वोः —'(८. २.७६) इति दीर्घः । विसर्गः । पिपठीः । पिपठिषौ । पिपठीर्भ्याम् । पिपठीष्षु, पिपठीःषु । चिकीर्ष् । 'रात्सस्य' (८. २. २४) इति सलोपः । चिकीः । चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु । दोः । 'दमेर्डोस्' इत्युणादिप्रत्ययसत्त्वात् षः । दोषौ । दोषः । दोषम् । दोषौ । शसादौ पद्दन्–'(६.१ ६३) इति वा दोषन् । दोष्णः, दोषः । दोष्णा, दोषा । दोषभ्याम् । दोर्भ्याम् । दोषसु, दोःषु, दोष्षु ॥

विद्वस् स् । उगित्त्वान्नुम् 'सान्तमहतः —' (६. ४. १०) इति दीर्घः । विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । भत्वे प्रसारणम् । विदुषः । विदुषा । पदत्वे वसुस्रंसु—' (८. २. ७२) इति दः । विद्वद्भ्याम् । एवं पेचिवान् । पेचिवांसौ । शसि प्रसारणे वलादेनाशादिडभावः । पेचुषः । पेचिवद्भ्याम् । एवं जग्मिवान् । जग्मिवांसौ । जग्मुषः । जग्मिवद्भ्याम् । अनिट्त्वे जगन्वान् । जगन्वांसौ । हे जगन्वन् । जगन्वांसम् जगन्वांसौ । शसादावुत्वे । कृतेऽजादित्वाद् 'गमहन—' (६. ४. ९८) इत्युपधालोपः । वकारनाशाद् 'म्वोः—' (८ २. ६५) इति नत्वाभावः । जग्मुषः । जग्मुषा । जगन्वद्भ्याम् । शुश्रुवान् । शुश्रुवांसौ । भत्वेऽजादित्वादुवङ् शुश्रुवुषः । एवं लुलूवान् । लुलूवांसौ । लुलुवुषः । बभूवान् । बभूवांसौ । अस्य भत्वे । बभूउस् अस् ।

## भुवो वुग्लुङ्लिटोः (६. ४. ८८)

लुङ्लिटोरचि परे भुवो वुगागमः स्यात् । इति कित्त्वाद् उत्त्वाभावात् बुक् । बभूवुषः । हिंसेः क्विपि इदित्त्वान्नलोपाभावे कंसहिन्स् स । 'सान्तमहतः—'(६ ४ १०) इति महच्छब्दसाहचर्यात् सान्तधातोर्न दीर्घः । संयोगान्तलोपः । कंसहिन् । कंसहिंसौ । कंसहिन्भ्याम् । ध्वंसेः क्विपि नलोपे ध्वस् ' वसुस्रंसु –' (८. २.७२) इति दः । दैत्यध्वत् । दैत्यध्वसौ । दैत्यध्वद्भ्याम् । एवं बन्धात् स्रंसते इति बन्धस्रत् । पुंस् स ।

---

१. 'र्भ्याम । तजूकेर पि.' २. 'लादेरुना ' ३. 'सौ 'कंसहिंसा कं' केरल-बर्नेलवपाठः

## पुंसोऽसुङ् (७. १. ८९)

सुटि पुंसोऽन्त्यस्यासुङ् स्यात् । उकार उच्चार्यर्थः । पुमस् स् । पुंस उगित्त्वस्योक्तत्वात् नुम् । 'सान्तमहतः—' (६. ४. १०) इति दीर्घः । पुमान् । पुमांसौ । हे पुमन् । पुमांसम् । पुमांसौ । 'मोऽनुस्वारः' (८. ३. २३) । पुंसः । पुंसा । संयोगान्तलोपः । पुंभ्याम् । पुंसु । उशनस् स् । 'ऋदुशनस्—'(७. १. ९४) इति सस्यानङ् । 'अतो गुणे' (६. १. ९७) । उशना । उशनसौ । उशनसः ।

' सम्बोधने तूशनसस्त्रिरूपं
सान्तं तथा नान्तमथाप्यदन्तम् ।'

इत्युक्तत्वाद् हे उशनः, हे उशनन्, हे उशन । उशनसा । उशनोभ्याम् । उशनस्सु । एवमनेहा । अनेहसौ । सम्बुद्धौ तु हे अनेहः । एवं पुरुदंसा । पुरुदंसौ । इन्द्रनामैतत् । वेधस असन्तत्वाद्दीर्घः । वेधाः । वेधसौ । हे वेधः । वेधोभ्याम् । वस्तेः क्विपि सुवस् । अधातोरित्युक्तेन दीर्घः । सुवः । सुवसौ । सुवोभ्याम् । प्रसारणिनस्तु वसेः क्विपि, उदन्वति वसतीति उदन्वदुः । 'शासिवसि' (८. ३. ६०) इति षः । उदन्वदुषौ उदन्वदुर्भ्याम् । उदन्वदुष्षु । एवं व्रजोः व्रजोषौ । व्रजोर्भ्याम् । भास्शब्दः पुंल्लिङ्गेऽप्यस्ति वेणीसंहारे प्रयोगश्चेत्यमरव्याख्या । भाः । भासौ । भ्यामादौ रोर्यत्वम् । लोपः । भाभ्याम् । अदस् स् ।

## अदस औ सुलोपश्च (७. २. १०७)

अदसः सौ परेऽन्त्यस्यौत्वं सोर्लोपश्च स्यात् । वृद्धिः । अदौ । 'तदोः सः सौ—' (७. २. १०६) इति दस्य सः । असौ । साकच्कस्यौत्वं वा वाच्यम् । औत्वाभावे सादुत्वं च । असकौ । असुकः । अत्रौत्वाभावात् त्यदाद्यत्वपररूपत्वयोः सौ विसर्गः । 'असुक इति दृष्टान्ताभावादि'त्यादावमुकशब्दः प्रकृत्यन्तरमित्याहुः । अदस् औ । त्यदाद्यत्वपररूपत्वे । वृद्धिः । अदौ । 'अदसोऽसेः —'

(८. २. ८०) इत्युत्वं मत्वं च । 'स्थानेऽन्तरतमः' (१. १. ५०) इति ह्रस्वस्य ह्रस्वः, दीर्घस्य दीर्घ उकारः । अमू । जसि त्यदाद्यत्वेन सर्ववत् अदे इति स्थिते—

एत ईद्बहुवचने (८. २. ८१)

असान्तस्यादसो बहुत्वे दात्परस्यैत ईत् स्यात् । दस्य च मः । अमी । सम्बुद्धौ—हे असौ । असकौ । असुकः । एवम् अदम् अदौ । अदानिति जाते पुनरुत्वमत्वे । अमुम् । अमू । अमून् । अद आ, उत्वमत्वे कृते धित्वान्नाभावः । अमुना । मुत्वस्यासिद्धत्वान्नात्वाभावे प्राप्ते—

न मु ने (८. २. ३)

नाभावे मुभावो नासिद्धः । एवमदाभ्यामिति जाते अमूभ्याम् । अद भिस् । 'नेदमदसोः –' (७. १. ११) इत्यैस्त्वाभाव एत्वम् अदेभिः ईत्वमत्वे । अमीभिः । अद स्मै इति स्थिते उत्वमत्वे षत्वं च । अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमुष्य । अदयोरिति स्थिते अमुयोः । अमीषाम् । अमुष्मिन् । अमीषु ॥

॥ इति हलन्तपुल्लिङ्गाः ॥

---

उपानह् स । हल्ङ्यादिलोपः । 'नहो धः' (८. २. ३४) जश्त्वचर्त्वे । उपानत्, उपानद् । उपानहौ । उपानद्भ्याम् इत्यादि । उष्णिक्, उष्णिहौ, उष्णिग्भ्यामित्यादि । 'दिव औत्' (७. १. ८४) द्यौः । दिवौ । 'दिव उत्' (६. १. १३१) । द्युभ्याम् ॥

गिर् । पदत्वे 'र्वोः —' (८. २. ७६) इति दीर्घः । गीः । गिरौ । गीर्भ्याम् । गीर्षु । चतुरश्चतस्रादेशः । चतस्रः इत्यादि तिसृवत् ॥

किमः कादेशे टाप् । का, के, काः सर्वावत् ।

इदम् स्,

### यः सौ (७. २. ११०)

इदमो दस्य सौ यः स्यात् । 'इदमो मः' (७. २. १०८) इत्यन्त्यस्य मत्वम् । सुलोपः । इयम् । त्यदाद्यत्वे 'दश्च' (७. २. १०९) इति मः । टाप् । इमे । इमाः । 'अनाप्यकः'(७. २. ११२) । अनया । इदाभ्यामिति स्थिते 'हलि लोपः' (७. २. ११३) । आभ्याम् । आभिः । अस्यै । अस्याः । अनयोः । आसाम् । अस्याम् । आसु । अन्वादेशे त्वेनादेशे टाप् । एनाम् । एने । एनाः । एनया । एनयोः । एनयोः ॥

क्विन्नन्तत्वात् कुः । स्रक् । स्रजौ । स्रग्भ्याम् । स्रक्षु ॥

त्यदाद्यत्वे टाप् । 'तदोः—' (७. २. १०६) सः । स्या । स्ये । स्याः । एवं सा, ते; या, ये; एषा, एते ॥

वाच् । 'चोः कुः' (८. २. ३०) वाक् । वाचौ । वाग्भ्याम् ॥

अप्शब्दो बहुत्वे । 'अप्तृन् –' (६. ४. ११) इति दीर्घः । आपः । अपः ॥

### अपो भि (७. ४. ४८)

भादौ प्रत्यये परे अपस्त स्यात् । जश्त्वम् । अद्भिः । अद्भ्यः । अपाम् । अप्सु ॥

दिक् । दिशौ । दिग्भ्याम् । दृशेः क्विन्नन्तत्वात् कुः । दृक् । दृशौ ॥

त्विष् । जश्त्वचर्त्वे । त्विट् । त्विषौ । सम्पदादिक्विप् । आशिस् । रुत्वे 'र्वो—' (८. २. ७६) इति दीर्घः । आशीः । 'शासिवसि —' (८ ३. ६०) इति षः । आशिषौ । आशीर्भ्याम् । आशीष्षु ॥

अदसः सौ प्राग्वत् । असौ । अदस् औ । त्यदाद्यत्वे टाप् । शीभावादि । अदे अदाः । पुनरुत्वमत्वे अमू । अमूः ।

अमूम् । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमूषु ॥

॥ इति हलन्तस्त्रीलिङ्गाः ॥

---

स्वनडुह् स् । स्वमोर्लुक् । वस्वादिना दः । स्वनडुत् । 'नपुंसकाच्च' (७. १. १९) इति शी । स्वनडुही । शेः सर्वनामस्थानत्वात् 'चतुरनडुहोः—' (७. १. ९८) इत्याम् । 'नपुंसकस्य झलचः' (७. १. ७२) इति नुम् । स्वनड्वांहि । हे स्वनडुत् । क्लीबे सर्वत्र द्वितीया प्रथमावत्, टादौ पुंवदेव ॥

वाः । वारी । अझलन्तत्वान्न नुम् । वारि । वारा । वार्भ्याम् । वार्षु । एवं मृदुगिर् 'र्वोः—' (८. २. ७६) इति दीर्घः । मृदुगीः । मृदुगिरी । मृदुगिरि ॥

विमलदिव् स् । सोर्लुकि पदत्वाद् 'दिव उत्' (६. १. १३१) इति उत् । विमलद्यु दिनम् । विमलदिवी । विमलदिवि ॥

किं स् । सोर्लुकि 'न लुमता—' (१. १. ६३) इति विभक्तिकार्याभावात् कादेशो न । किम् । के । कानि । एवम् इदम् । इमे । इमानि । अन्वादेशे एनदिति नपुंसकैकवचने वाच्यम् । एनत्, एनद् । एने, एनानि । शेषं पुंवत् ॥

धाम । 'विभाषा ङिश्योः' (६. ४. १३६) इति वाल्लोपः । धाम्नी, धामनी । धामानि । 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः ।' (वा० ७. १. ८८) हे धामन् । हे धाम । 'न संयोगात् —' (६. ४. १३७) इत्यल्लोपाभावः । ब्रह्म ब्रह्मणी । हे ब्रह्मन् । हे ब्रह्म । अहन् स् । 'न लुमता—' (१. १. ६३) इति प्रत्ययलक्षणनिषेधाद् 'रोऽसुपि' (८ २ ६९) इति नस्य रत्वम् । अहर्याति इत्यादौ रत्वफलम् । अहः । 'विभाषा ङिश्योः' (६.४.१३६) इत्यल्लोपः । अह्नी, अहनी । अहानि । हे अहः । अह्ना । अहन् भ्याम्,

अहन् (८. २. ६८)

अहन्नित्यस्य पदान्ते नस्य रुः स्यात् । अत्राहान्निति नान्तनिर्देशाद् रत्वरुत्वासिद्धिजो नलोपो न । रोरुत्वम् । अहोभ्याम् । अहस्सु ॥

अक्लीबे सौ तु हल्ङ्यादिलोपे प्रत्ययलक्षणात् ।
रुः स्यात् कृशाहा हेमन्तो हे दीर्घाहो निदाघ भोः ॥

कृशाहन् स । 'सर्वनामस्थाने च–' (६. ४. ८) इति दीर्घः । सुलोपः । नस्य रुः । कृशाहाः । कृशाहानौ । कृशाहानः । हे कृशाहः । शसि कृशाह्नः । कृशाहोभ्याम् । दण्डि । दण्डिनी । 'इन्हन्पूषार्यम्णां शौ' (६. ४. १२) इत्युक्तेर्दीर्घः । दण्डीनि । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्यमाणि ॥

स्रागिति क्विन्नन्तत्वादसृजः पदत्वे कुत्वम् । असृक् । असृजी । असृञ्जि । 'पद्दन्--' (६. १. ६३) इति असन् वा शसि । असानि, असृञ्जि । अस्ना, असृजा । असभ्याम्, असृग्भ्याम् । अससु, असृक्षु । बहूर्क् । बहूर्जी । बहूर्जः शौ नुम्प्रतिषेधः । अन्त्यात् पूर्वं नुमित्येके । बहूर्जि । बहून्र्जि । बहूर्जा । बहूर्ग्भ्याम् । बहूर्क्षु ॥

त्यद् । त्ये । त्यानि । एवं तत्, यत्, एतत् । एतदोऽन्वादेशे[1] एनत्, एनद् ॥

प्रत्यक् । औऔटोः क्लीबे भत्वादल्लोपदीर्घौ । प्रतीची । प्रत्यञ्चि । एवं तिरश्ची[2] । तिर्यञ्चि टादौ पुंवत् ॥

यकृत् । यकृती । यकृन्ति । शसादौ वा यकन् । यकानि, यकृन्ति । यक्ना, यकृता । यकभ्यां, यकृद्भ्याम् । यकसु, यकृत्सु । एवं शकृतः शकन् । शकानि, शकृन्ति । ददत् । ददती ॥

---

१. 'एतदेवान्वादेशे एनत्' क. पाठः. २. 'एवं तिर्यक् ति' केरलवर्मदेवपाठः.

## वा नपुंसकस्य (७. १. ७९)

अभ्यस्ताच्छत्रन्तस्य क्लीबस्य सर्वनामस्थाने नुम् वा स्यात् । ददन्ति, ददति । एवं जक्षज्जाग्रदादि । तुदत् । तुदत् स्त्री । 'आच्छीनद्योर्नुम्' (७. १. ८०) इति वा नुम् । तुदन्ती, तुदती[1] । पचत् । 'शप्श्यनोर्नित्यम्' (७. १. ८१) इति नुम् । पचन्ती । पचन्ति, इत्यादि ङीबुक्तवद् ज्ञेयम् । समासान्तविधेरनित्यत्वाद् 'ऋक्पूः—' (५. ४. ७४) इत्यप्रत्ययाभावे । बह्वप् बह्वपी । 'अप्तृन्—' (६. ४. ११) इति दीर्घः । दीर्घो नेति केचित् । बह्वाम्पि, बह्वम्पि । बह्वपा । 'अपो भि' (७. ४. ४८) बह्वद्भ्याम् ।

वृक्षतट् । वृक्षतक्षी । नुम् । वृक्षतङ्क्षि ॥

पयः । पयसी । नुमि 'सान्तमहतः—' (६. ४. १०) इति दीर्घः । पयांसि । पयसा । पयोभ्याम् । पयस्सु । वस्वादिना दः पपिवत् । पपुषी । पपिवांसि । हविः । उणादिप्रत्ययसस्य षः । हविषी । नुमि 'सान्त—' (६. ४. १०) इति दीर्घः । नुम्व्यवाये षः । हवींषि । हविषा । हविर्भ्याम् । हविष्षु । एवं धनुरादि । पिपठिष्शब्दस्य तु 'र्वोः—' (८. २. ७६) इति दीर्घः । पिपठीः । पिपठिषी । क्विप्कृतस्यातो लोपस्य स्थानिवत्त्वाच्छौ नुम् न । पिपठिषि । अदसः स्वमोर्लुकि रुत्वादेरसिद्धत्वेन सकारवत्वाद् 'अदसोऽसेः—' (८. २. ८०) इति उत्वमत्वे न । अदः । अदे अदानीति स्थिते उत्वमत्वे अमू । अमूनि । टादौ पुंवत् ॥

इति हलन्तक्लीबाः ।

---

## अथाव्ययानि ।

स्वरादिश्चाव्ययीभावा निपातास्तुमुनादयः ।
नानाप्रकृतयश्चेति पञ्चधाव्ययसंग्रहः ॥

---

१. 'ती तुदन्ति । पचत्' इति केरलवर्मदेवपाठः ।

स्वरादयोऽत्र सत्त्वार्था अव्ययीभावकेष्वपि ।
उपकुम्भादय[1]श्चेति देशाद्यर्थपरत्वतः ॥

असत्त्ववचनास्त्वन्ये निपाताद्यास्त्रयो मताः ।
निपाता द्योतका अन्ये वाचकास्त्विवति भिद्यते ॥

निपातैर्द्धर्ममात्रं हि नामाख्यातेषु सूच्यते ।
अत्यन्तानर्थकाश्चैके निपातास्तेषु भाष्यकृत् ॥

अर्थवत्कार्यमस्त्येवेत्यर्थवत्सूत्र ऊचिवान् ।
सर्वाव्ययानां तुल्यैव लिङ्गसङ्ख्या[2]दिहीनता ॥

असत्त्ववचनानां तु कारकं च न विद्यते ।
कारकार्हं स्वरूपं हि द्रव्याख्यं सत्त्वमुच्यते ।

त्रेधा त्वसत्त्ववाचित्वं क्वचिदर्थस्वभावतः ।
साध्यक्रियाप्रधानत्वाद् विभक्त्यर्थपरत्वतः ॥

निपाते तुमुनादौ च तसिलादिषु चोह्यताम् ।
नानाञोश्चाव्ययीभावे निपातार्थत्वतो हि तत् ॥

एवं स्थिते तु सत्त्वार्थात् कर्मत्वादौ विभक्तयः ।
भवन्ति किन्त्वव्ययत्वात् सर्वैकवचनानि तु ॥

सामान्येनैकवचनं निस्सङ्ख्येष्वपि हि स्थितम् ।
असत्त्ववचनानां तु कर्मत्वादेरसम्भवात् ॥

प्रथमैवार्थमात्रे स्यात् तथैकवचनस्य च ।
सामान्योक्तेः सुरेव स्यादिति न्यासादिषु स्थितम् ॥

तद्धितश्चेति सूत्रे तु हरदत्तोऽन्यथाब्रवीत् ।
संख्याकारकयोर्यत्र सम्भवस्तत्र वै सुपाम् ॥

---

१. 'यः केचिद्देशा', २. 'विही', इति केरळवर्मदेवपाठः.

तदर्थनियमोऽन्यत्र भवत्त्यर्थं विनापि ते ।
सामान्येनैकवचनं चोक्तं तेन स्वमादयः ॥

सप्तापि स्युरसत्वार्थाद् यथेष्टमिति तन्मतम् ।
आदिमातिक्रमे कारणाभावात् प्रथमैव हि ॥

इत्युक्त्वा कैय्यटोऽप्याह सप्तकोत्पत्तिमप्यमूम् ।
अस्मिन् पक्षेऽव्ययीभावाद् भवेदधितटादिति ॥

तथा तृतीयासप्तम्योस्तद्युक्तं वेति चिन्त्यताम् ।
किञ्चानव्ययरूपेऽपि शब्दे साध्यक्रियार्थके ॥

पचन्तिरूपं सुभत्वं भवितव्यमितीदृशे ।
सामान्यलिङ्गं क्लीबत्वं तथैकवचनं गते ॥

सप्तैकवचनीप्राप्ते[1] स्यान्निपातादिवन्न किम् ।
आस्तामेतद्यथार्हं तु सुपि जाते ततो लुकि ॥

न व्येति विविधं नैति रूपाभेदादतोऽव्ययम् ।
तदन्तेऽप्यव्ययत्वं स्यात् परमस्वःसुराः स्थिताः ॥

अप्राधान्ये तु नैव स्यात् स्वरतीतावतिस्वरौ ।

अथ स्वरादिः । स्वर्भूर्भुवर्महर्जनस्तपःसत्यं लोकेषु । अन्त्यो मान्तः । अन्ये रान्ताः । महोजनस्तपस्सत्या अनव्ययाश्च सन्ति । प्रेत्य अमुत्र परलोके । प्रेत्य गत इत्यादौ समासादि फलम् । अन्तर्मध्ये । बहिर्बाह्ये । सप्तम्यर्थावेतौ । चनोऽन्नभक्त्योः । चनस्तृप्यति । भक्तौ कृष्णे चनोऽस्तु । जामि भूयश्चावृत्तौ । जामि[2] कल्पन्ति भूयो वा । पुनर्विशेषे च । धीमान् पुनः प्रयतते पुनर्जन्मनिवृत्तये । प्रातः प्रगे प्राह्णे प्रत्यूषार्थाः । आद्यो रान्तः । द्वावेदन्तौ[3] त्वनव्ययौ स्तः । वस्तोर्दिवाहर्दिनार्थाः । सायं दिनान्ते मान्तोऽयम् । घञन्तस्त्व-

१. 'प्राप्तिः' २. 'ज', ३. 'न्तौ । तौ त्वनव्ययावदन्तौ' केरलवर्मदेवपाठः.

अनव्ययमस्ति । दोषानक्तमुषा रात्र्यर्थाः । उषातनं तमः । ह्योऽतीते । श्वोऽनागते । परश्वः परेऽहनि । संवत् तृतीये वर्षे । संवद् गतः । अस्तं सनुतरन्तर्धाने । सनुतर्याति चोरः । कं मूर्धाम्बुसुखनिन्दासु । निन्दितदर्पवान् कन्दर्पः । शंयोर्मयस्सुखे । शं दुःखशमजं सौख्यम् । योश्च मयश्च विषयसुखम् । पुरा भूतविप्रकर्षभविष्यदासत्त्योः । विहायसा आकाशे । रोदसी दिवस्पृथिव्योः । रोदस्यासीद् यशोमयम् । रोदस्यावित्याद्यनव्ययेऽपि । अप्न शीघ्रे । निकषा सामीप्ये । समया मध्ये च । समया ग्राममास्ते । ग्रामस्य समीपे मध्ये वेत्यर्थः । असाम्प्रतमयुक्ते । सत्यमृताद्धा सत्ये । आद्यो मान्तः । सत्यंवादी । अद्धेति प्रत्यक्षेऽपि । मिथ्या मृषा विस्रसा अनृते । विस्रसैतद्वचः । मुधा वृथा विफले । इद्धा प्राकाश्ये । अर्वाक् प्राक् पूर्वे ।

अधमार्थादर्वशब्दाद्श्चत्यन्तरत्वनव्ययम् ।

चरममनद्ये । रहोऽप्राकाश्ये । अनव्ययं चास्ति । मिथोऽन्योन्ये च । द्वन्द्वं मिथुनं मिथु युग्मार्थे ।

ददृशुर्मिथुनं भूतास्तयोर्द्वन्द्वं सतोर्मृधम् ।

सकृत् सदैकवारयोः । सदार्थे—सकृद्युवानो गीर्वाणाः । ताजग् जोषक् झगिति झटिति तरसा द्राक् स्राङ्मङ्क्ष्वाश्वरं शैघ्र्ये । ऊर्ध्वमूर्ध्वे । मान्तः । उच्चैरुच्चे । नीचैरर्वाङ्[1] । न्यङ् नीचे । अवश्यं निश्चये[2] । सामि अर्धे । साचि तिर्यक्त्वे । अन्वगानुषगानुकूल्ये । आनुषक् त्वानुपूर्व्य इत्यन्ये । सीं विषु समन्तात् समन्ततः परितः सर्वतोभावे । उभयतोऽभितोऽभिमुखे च । चात् सर्वतोभाव उभयतोभावे च । मुहुरसकृदभीक्ष्णं पौनःपुन्ये । ज्योग् दीर्घायुष्ट्वे । हिरुग् वर्जनहिंसयोः । ईषदल्पे । मनाग् अनुशये च । मनाग् भ्रष्टोऽस्मि । अनुशयितोऽहमित्यर्थः । शनैर्मान्द्ये । हठाद् बलात् प्रसह्यार्यहलं हठे । हठो बलात्कारः । आराद् दूरान्तिकयोः । प्रायः प्रायेण बाहुल्ये ।

---

१. 'वाङ्' २. 'नियमे', केरलवर्मदेवपाठः.

'स्वबाहुप्रायेण क्षपितरिपुरास्ते स भगवान् ।'

अदन्तोऽपि प्रायशब्दोऽस्ति ।युगपदेकपदे। प्रबाहुक् तुल्यकाले । अकस्मादेकपदे च अतर्किते। सपद्यह्नाय तत्क्षणे । उपांशु अप्रकाशे। उपांशु दण्ड्यः । तूष्णीमवाचि । जोषं सुखे च । पशु सम्यक्त्वे । तिरोऽन्तर्धानतिरश्चोः । तिरश्चि–तिरः काष्ठं कुरु । स्वयमात्मनार्थे । कु कुत्साल्पयोः । अपष्ठु दुर्दुष्ठु दुष्टे । दुर्जनः । एतत्पिशुनदौष्ठवम् । काममनुमतौ । निकामं प्रकामं सुष्ठु बलवदतीवात्यर्थे । सुष्ठु शोभनेऽपि ।

'प्रज्ञानिकामं जितशात्रवोऽयम् ।'

सु शु बट् वेट् प्याट् व्याट् प्रशंसायां च । चादत्यर्थे च । सुमुखः । शुनासीरः । 'व्याट् पार्वती गायतु मङ्गलानि।' वरं हीनोत्कर्षे नवरं परं केवलं किन्त्वेवार्थे । किन्त्वर्थ एवार्थे चेत्यर्थः । परंपुरुषायेत्युत्कृष्टेऽपि । चिरं चिराय चिररात्राय चिरस्य चिराच्चिरेण चिरार्थाः । तत्त्वं व्यक्तौ । तत्त्वंकृतशास्त्रार्थोऽयम् । पुरोऽग्रार्थे पूजायां च । अच्छाभिमुख्ये । अच्छभावमिच्छामि ते । प्रादुराविः प्रकाशे । प्रादुष्प्रभावः । आविर्यशाः । एतानि गतिप्रतिरूपाण्यव्ययान्तराणि ।

वरिवः परिचर्यायाम् । करोमि वरिवो विष्णोः । सहसा अतर्किताविमर्शयोः । शश्वत् सनत्[1] सना नित्यदा सदिति नित्ये । इयं सदिति रम्या । हन्त भिक्षादाने । यतीनां हन्त करोति । भिक्षादानं करोतीत्यर्थः । भिक्षादानस्य च प्रधानदानत्वान्महादानं हन्तकारः । स्वधा तृप्तौ । स्वधा प्राप्ता द्विजाः । तृप्तिं प्राप्ता इत्यर्थः । पितृदानार्थे तु स्वधा वक्ष्यते । स्वस्त्यविनाशे । स्वस्तितायै भजे त्वाम् । अविनाशित्वायेत्यर्थः । सपदि विद्रवं सम्प्रति चेदानीमर्थे । विद्रवं विद्रुतोऽसौ । ऋते विनान्यत्र वर्जने । अन्तरेणान्तरा मध्ये च । चादुभावपि वर्जने च । पृथङ् नाना भेदे च[3] । भेदे–पृथग्भूताभावाः, नानाभूता वा । वर्जने कृष्णात् पृथङ् न किञ्चित्, नाना वा । अन्यद् विशेष्ये । कुवित् प्रशस्तबह्वोः । स्वरिति प्रीतौ । आज्येनाग्निः स्वरिति ।

---

१. 'पाट्व्या', २. 'तू सनात् सना च', ३. 'च चादुर्जने च । भेदे ।' केरलवर्मदेवपाठः.

प्रीयत इत्यर्थः । स्वरिति दधुर्द्विजाः । प्रीतिं दधुरित्यर्थः । स्वगा निष्क्रिये । स्वगा सन्त्वृत्विजः । निष्क्रियाः सन्त्वित्यर्थः ।

इहानुकरणान्याह सूत्रकारः स्वरादिषु ।
गवित्याह्वादिसिद्ध्यर्थं वक्ष्यते चान्यथागतिः ॥

मन्त्रस्थानपि बीजादीन् पठत्यत्रैव सूत्रकृत् ।
वत्यादिराममौ चात्र प्रशान्शब्दोऽपि पठ्यते ॥

अनन्ताः खल्वनन्तार्थाः स्वराद्याश्चादयोऽपि च ।
असत्त्वपरतैवात्र चादीनां नियता मता ॥

द्योतकत्वं क्वचिन्नास्ति वाचकास्त्वादहादयः ।

च समुच्चयादौ हेतौ च । हेतौ—शीतं च कथं गमिष्यामि । शीताद्धेतोः कथं गमिष्यामीत्यर्थः । चण् यद्यर्थे । वा विकल्पोपमानान्याभावसमुच्चयेषु । उपमाने—मणी वोष्ट्रस्य लम्बेते । अन्याभावे—कृष्णं वा तल्लीलां वा कामये । न तृतीयमित्यर्थः । ह प्रसिद्धिनिन्दादौ । अह प्रशंसानिन्दानिर्देशेषु । निर्देशे—अह महारण्यं यातु । एव अवधारणासम्भावनादौ । एवं प्रकारनिश्चयादौ । नो नहि निषेधे । अनेति च भोजः । अनोपगा ते बुद्धिः । अकारोऽपि निषेधेऽस्तीति स्वामी । अ कृष्णः क्रूरः । कृष्णो न क्रूर इत्यर्थः । न नहि[1]रुपमानेऽपि । नञ् तुल्यान्यविरुद्धाभावाल्पक्षेपेषु । अल्पे—अनुदरा कन्या । क्षेपे—अपचासि । माङ् मास्म माकिर्वारणे । मा शङ्कायां च । मा करिष्यति साहसमिति शङ्का । चेद्यदीत्थं कारणोपदेशे । कृष्णश्चेदर्च्यते मुक्तिर्लप्स्यते इति मुक्तौ कारणोक्तिः । एवं कृष्णो यद्यर्च्यते, कृष्ण इत्थमर्च्यते । नूनमूहनिश्चययोः । कच्चित् कच्चनेष्टप्रश्ने । हन्त हर्षकृपाखेदवाक्यारम्भदानेषु । वाक्यारम्भे—हन्त ते कथयिष्यामि । दाने—इदं नृपेभ्यो हन्त । दीयत इत्यर्थः । स्वरादौ भिक्षादानार्थस्य सर्वकारकयोगो भेदः । वावधारणे । त्वाव त्वै तुवै विशेषे । वै प्रसिद्धौ च । तु हेतुविशेषावधारणव्यावृत्तिषु । व्यावृत्तौ—नित्यस्तु स्याच्छब्दः । अनित्य-

१. 'नकि' केरळवर्मदेवपाठः

त्वपक्षोऽत्र व्यावर्त्यते । नु न्वै स्विद् वितर्के । रै[1] अनादरे । श्रौषड् वौषड् वषड् वाड् स्वाहा स्वधा हविर्दाने । फडुत्सारणे । छम्बडाभिमुख्येऽन्तःकरणे च । छम्बण्मुखोऽयम् । दैत्येन जले छम्बट् कृता भूः । अन्तर्निवेशितेत्यर्थः । आद अथाथो प्रश्नारम्भानन्तर्यप्रतिज्ञासमुच्चयादौ । प्रतिज्ञायां— किं गोपो भवान्? अथेति ब्रूमः । समुच्चये- कृष्णोऽथ रामो विपिनं विवेश । अलं वारणे । भूषणे तु गतिः । पर्याप्तिशक्त्योर्द्रव्यपरत्वात् स्वरादिः । अलमन्नम् । अलं मल्लः । चिच्चनासाकल्योपमानासम्मतिषु । असाकल्ये किंशब्दयोग एव । काश्चित् कश्चन । उपमाने—मेघाश्चित् कृष्णः । असम्मतौ —तक्रं चिदानय, दधि मे योग्यम् । हा शोकनिन्दासम्भ्रमविस्मयेषु । सम्भ्रमे-- कथं हा हा पुरोपरोधः ।- विस्मये—द्विजा हा देववैभवम् । हि प्रसिद्धिहेत्वोः । हिं स्तोभे । यज्ञादावुक्तिविशेषः स्तोभः । हुं निरासादौ । हं भयादिविकारे । हो प्रतिवाक्ये । अहो अहह बत खेदाद्भुतकृपाहर्षादौ । अहा इत्यप्याहुः । हीं भर्त्सने च । आहो वितर्के । उत प्रश्नसमुच्चयादौ च । ओं प्रारम्भानुज्ञाविरामेषु । ब्रह्मार्थे तु स्वरादिः । कूपत् सूपत् चूपत् प्रश्नवितर्कप्रशंसासु । शश्वन्मुहुरर्थे । नित्यकाले तु स्वरादिः । नन्वनुमतिप्रश्ननिश्चयानुनयादौ । हं हो हे है हये हरे आह्वाने । भोः खेददर्पयोश्च । कष्टं भोः । सोऽहं भो भुवि भार्गवः । अररे सावक्षेप आह्वाने । रे अरे अन्वे[2] हीनेषु । हण्डे हञ्जे हला नीचाचेटीसखीषु नाट्योक्तौ । भगो अघो पूज्यपापिनोः । अङ्गेष्टाह्वानपुनरर्थयोः । अयमङ्ग न तादृशः । अयं पुनरित्यर्थः । अये स्मृतिक्रोधखेदसम्भ्रमेषु । स्मृतौ—अये रामोऽयम् । क्रोधे—अये कोऽसौ । खेदे— अये श्रान्ताः स्मः । सम्भ्रमे—अये धावत धावत । सम्भ्रमयोगादादरेऽपि । अयि चानुनये । नु प्रश्नोपमाप्रत्युक्तिवितर्केषु । शक्रो नु राजा । किं प्रश्नाक्षेपेषदर्थादौ । ईषदर्थे किन्नरः । किमु विमर्शादौ । पुत् कुत्सायाम् । कुत्सितश्चरति पुल्कसः । कद्धर्षप्रश्नयोः । अदाश्चर्ये । आश्चर्यतया भूतमद्भुतम् । अत आतो यदा यत्तद्धेतौ । फित् भर्त्सने ।

---

1. 'रै अ', 2. 'अवे' केरलत्रमदेवपाठः.

धिङ् निन्दाभर्त्सनयोः । इवोपमोत्प्रेक्षावाक्यालङ्कारेषदर्थेषु । ईषदर्थे-कुपित इवायम् । किल प्रसिद्ध्यलीकारुचिपरिहासादौ । खलु निषेधवाक्यालङ्कारानुनयादौ । अनुनये—न खलु न खलु साहसं कार्यमेतत् । स्मातीते विस्मये च । दिष्ट्या हर्षे । मर्यादावधौ । अवधावाधीयत इति मर्यादा । साकं सार्धं समं सत्रा सह सजूरैक्ये । अमा समीपे च । जातु खेदसम्भावनामर्षनिश्चयकदाचिदर्थेषु । खेदे—न जात्वहमभुञ्जि । सम्भावनायां—को जातु युध्यतेऽर्जुनेन । आङ् मर्यादाभिविधीषदर्थेषु । आ वाक्यस्मृत्योः । विकल्पेऽपीति शङ्करः । आम् प्रतिवाक्ये । शप् प्रतिग्रहणे । गां शप् करोति । आम परमं बाढं चाङ्गीकारे । आः कोपपीडयोः । उञ् वितर्कसम्बोधन-पादपूरणेषु । उं स्मृतौ । ऊं स्त्रीणां सविकारवचने । ऊं नाह-मिदं वेद्मि । नाम प्रसिद्ध्यलीककोपकुत्सनसम्भावनाविस्मयादौ । सम्भावनायां—एवं नाम भविष्यति । विस्मये—अयं नाम शैलमुद-धात् । इति हेतुप्रकरणस्वरूपसमाप्तिशब्दप्रसिद्धिमत्युक्तिविवक्षा-नियमादौ । स्वरूपे—कृष्ण इति स्मरति । मत्युक्त्योः—पापोऽयमिति गतः । इत्युक्त्वा मत्वा वेत्यर्थः । इदेवार्थो व्यर्थश्च । ईकंघादयो व्यर्थाः । आद्युक्तेः क्वचिच्च वैतुह्यादयोऽपि । इदमर्थस्त्वीं-शब्दः स्वरादिः ॥

अथ निपातसमुदायाः । शुकं शैघ्र्ये । सुकं पूजायाम् । नुकं वितर्के । नहिकं निषेधे । हाधिक् खेदे । किन्तु किमुत किंपुनः किमङ्ग विशेषे । नवै नह्वै नैवेत्यर्थे । नेदु यद्यर्थे । अथकिं सम्मते । एवमेव सामान्यवृथार्थयोश्च । एवमेव बाला रम्याः किंपुनः कृष्णः । सामा-न्येन बाला रम्या इत्यर्थः । वृथार्थे—एवमेवागतः । सम्मते—एवमेवैतत् । यदिनाम यदिपरं प्रकृतान्यथार्थे[2] । यदुत वाक्यार्थनिर्देशे । श्रेयस्तद् यदुत कृष्णः सेव्यते । प्रत्युतोक्तान्यथात्वे । यथाकथञ्चित् यथाकथा च अनादरे । इतिह प्रवादे[3] । मा तावद् निषेधनिश्चयामर्षेषु । कथञ्चित् कृच्छ्रे । अथवा यद्वा यदिवा पक्षान्तरे । अपिच किञ्च अन्यच्च

१. 'गा' ग. पाठः. २. 'ख्वे', ३. 'प्रसिद्धवादे' इति केरलवर्मदेवपाठः.

समुच्चये । ननु चाक्षेपे । ननु च नित्यः शब्दः । अनित्यत्वपक्षो-ऽत्राक्षिप्यते । यच्च यत्रानवक्लृप्त्यमर्षगर्हाश्चर्येषु । किंकिल क्रोधा-विश्वासयोः[1] । कदाचिदपूर्वाशङ्कयोः ।

कदाचिदुत्थितं ज्योती रामाख्यं भूतये[2]ऽद्य नः ।
कदाचिदमुना क्षिप्रं धक्ष्यते रक्षसां कुलम् ॥

अहोनुखलु भो आश्चर्ये । नोचेन्नचेदन्यथात्वे ॥

अथ सुबन्तप्रतिरूपाः । शुभं कल्याणे । अहं दर्पे । कृतं वारणे । पर्याप्तं सामर्थ्ये च । हरिणैव पर्याप्तम् । हरिणैव शक्यामित्यर्थः । अञ्जसा सम्यग्वेगयोः । यावता पक्षान्तरे । ते मे टार्थे । त्वया मयेत्यर्थ इत्यर्थः । अह्नाय शीघ्रे । कृते तादर्थ्ये । अन्योन्यस्य परस्परस्याग्रे हेतौ । रात्रौवेलायामादयः स्वार्थे । मात्रायामल्पार्थे ॥

अथ तद्धितप्रतिरूपाः । यावत्तावदवध्यधिकरण[3]साकल्यक्रमाव-धारणकालादौ । यावद्धेतौ च । तावदल्पे च । क्षमस्व तावत् । किञ्चिदित्यर्थः । ततः आरम्भानन्तर्यकथान्तरेषु । कथान्तरे—ततस्ततः । अन्यत्र वर्जने । यथा योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु । तथा समुच्चयाङ्गीकारनिदर्शनसादृश्येषु । कथं सम्भ्रमहर्षादौ । तर्हि विशे-षादौ । अर्जुनस्तर्हि शूरः । स तु विशेषतः शूर इत्यर्थः ॥

अथ तिङन्तप्रतिरूपाः । अस्ति नास्ति सत्त्वासत्त्वयोः । अनयो-र्द्रव्यपरत्वमप्यस्तिक्षीराद्युक्तेः सिद्धम् । अस्यस्मि त्वमहमर्थे । विद्यते भवति स्वार्थे । एहि प्रहासे । ब्रूहि प्रैषादौ । मन्ये शङ्के स्याद् वितर्के । जानाम्यवगमे । अस्तु भवतु पूर्यते वारणे । अस्तु सम्मानेन । आसाह त्विडर्थे । वर्तते दोषसंवरणे । नवर्ततेऽनुचिते । याति गच्छति शक्ये । एतत्कर्तुं याति गच्छति वा । आदहारम्भहिंसाकुत्सनेषु । आदह भोक्तुम् । आदहारीन् पुरन्दरः । हिनस्तीत्यर्थः । अपेह्यादह । आतङ्का-दङ्क कुत्साविनाशयोः । कुत्सायां—भुङ्क्ष्वातङ्क तृप्तः । विनाशे—आदङ्क क्षीरं दधि । भावय पश्य पश्यताश्चर्ये । अच्प्रातिरूपका अप्ययादौ । अ

---

१. 'योः । ई ही भर्त्सने । कदा' २. 'भीतये', ३. 'कारसा', केरळवर्मदेवपाठः.

अपेहीत्यादि । उपसर्गप्रतिरूपकाश्च । प्रसज्यप्रतिषेधाद्‌ौ च ल्यबन्ता निपाताः । तुल्यार्थनिपातानां सहोक्तावप्येकार्थतैव । किंस्वित् आहो-स्वित् उतस्विदित्यादि ॥

॥ इत्यव्ययानि ॥

## सर्वस्य द्वे (८.१.१)

इतः परं सर्वस्य शब्दस्य द्वे आवृत्ती स्तः इत्यधिक्रियते ॥

## नित्यवीप्सयोः (८. १. ४)

इति पौनःपुन्यरूपे नित्यत्वे क्रियाया द्विरुक्तिः सुबन्तस्य व्याप्तिविवक्षायाम् ।

रमते रमते कृष्णः पौनःपुन्यमिहोच्यते ।
गोपी गोपी हरिं प्राप्ता ताः सर्वा इति गम्यते ॥

सर्वस्येत्युक्तेः सोपसर्गस्यापि । प्रयाति प्रयाति ।

तिङ्क्षु द्विरुक्तितः पश्चाद् घयोगः सुप्सु तत्पुरः ।
नौमिनौमितरां साधुतरं साधुतरं जनम् ॥

## परेर्वर्जने (८. १. ५)

वर्जनार्थे कर्मप्रवचनीयस्य परेर्द्वे स्तः । वेति वाच्यम् । परि परि ग्रामात् सेना गता, परि ग्रामात् । समासे नेति वाच्यम् । परिग्रामं गता ॥

## एकं बहुव्रीहिवत् (८. १. ९)

वीप्सायां द्विरुक्त एकशब्दो बहुव्रीहिवत् स्यात् । तेन सुब्लुक् । एकैकं पठति । अतिदिष्टबहुव्रीहेः 'न बहुव्रीहौ' (१.१.२९) इति सर्वनामत्वनिषेधो न । एकैकस्मै ॥

## आबाधे च (८. १. १०)

पीडायां च द्विरुक्तिः स्यात्तद् बहुव्रीहिवद् भवेत् ।
कष्टं गतगतः कान्तो गत इत्येव वर्ण्यते ॥

बहुव्रीहिवदित्युक्त्या स्त्रियाः पुंवदितीरितः ।
पुंवद्भावोऽपि पूर्वस्य भवेद् गतगता प्रिया ॥

## कर्मधारयवदुत्तरेषु (८. १. ११)

उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं स्यात् । सुब्लुक्पुंवद्भावावस्यापि कार्यम् । स्वरादौ तु भेदः ॥

## प्रकारे गुणवचनस्य (८. १. १२)

सादृश्येऽर्थे गुणवचनस्य द्वे स्तः, कर्मधारयवच्च स्यात् । मृदुमृदुः । पुंवद्भावाद् मृदुमृद्वी । परिपूर्णमृदुना सदृशः ईषन्मृदुरित्यर्थः । अत्यन्तमृदौ तु मृदुष्वपि मृदुरिति, मृदुभ्योऽपि मृदुरिति वा समासमाहुर्माधवाद्याः । एवं 'मन्दमन्दम्'। वीप्सायां तु सुब्लुगभावान्मन्दं मन्दमिति स्यात् । 'आनुपूर्व्ये द्वे स्तः' इति वाच्यम् । ज्येष्ठं ज्येष्ठं प्रवेशय । 'अनेकरूपार्थानामवधारणे द्वे वाच्ये' । एभ्यो माषं माषं देहि । माषमेव नाधिकमिति नियम्यते । 'एकत्वे तु न' । एभ्यः सहैकमेव माषं देहि । 'चापले द्वे वाच्ये'। चापलं सम्भ्रमादि । अहिरहिः । उत्तिष्ठोत्तिष्ठ । नेह द्वित्वनियमः । सर्पः सर्पः सर्पः । 'वाक्यस्यापि दृश्यते'। अहो दर्शनीयाहो दर्शनीया । मह्यं रोचते मह्यं रोचते । 'पदैकदेशस्यापि'। स्तनौ मृगाक्ष्याः कठिनौ ठिनौ ठिनौ । 'डाचि बहुलं द्वे भवतः'(वा० ६. १. ९९) इत्यत्र बहुलोक्तेरडाच्यप्यनुकरणस्य द्विरुक्तिः स्यात् । तेन पटत् पटदिति संहितायामुक्तम् । 'पूर्वप्रथमयोरतिशये द्वे स्तः'। पूर्वं पूर्वमगात् । प्रथमं प्रथमं गतः । पूर्वतरं प्रथमतरामित्यर्थः । स्त्रीलिङ्गभावप्रत्ययान्तयोगे प्रश्नेऽर्थे डतरडतमयोर्द्वे स्तः । कतरा कतरात्र चारुता, कतमा कतमा भव्यता । अन्यस्यापि दृश्यते । कीदृशी कीदृशी चारुता । स्त्रीलिङ्गभावं विनापि दृष्टम् । कतरः कतरो विभवः ॥

क्रियाविनिमये द्योत्ये सर्वनाम द्विरुच्यते ।
समासवत् सुब्लुगादि कार्यं च बहुलं भवेत् ॥

तत्रासमासवत्त्वे तु भवेन् पूर्वपदस्य सुः ।
उत्तरस्य यथार्हं स्युः सर्वा अपि विभक्तयः ॥

बहुलोक्त्यान्यपरशब्दयोरसमासत्वमेव । तेन पूर्वपदस्य सुविभक्तिः सन्धिकार्यं च ।

अन्योन्यमनमन् विप्रा अन्योन्येन कृता स्तुतिः ।
अन्योन्यस्मै हितं चक्रुरन्योन्यस्माच्च शुश्रुवुः ।

अन्योन्यस्य प्रसन्नाः खल्वन्योन्यस्मिन् मुदं दधुः ॥
एवं परस्परं तत्र कस्कादित्वाद् विसर्गसः ।

इतरशब्दस्य तु नित्यं समासवद्भावः । तेन सुब्लुक् । पुनरुत्तरपदस्य विभक्तियोगादितरेतरमित्यादि । स्त्रीनपुंसकयोरुत्तरपदविभक्तेराम्भावो वा वाच्यः ॥

परस्परां समीयुस्ता अन्योन्यामितरेतराम् ।
तदपत्यानि चान्योन्यां मिलन्ति स्म महोत्सवे ॥

विकल्पादन्योन्यमित्याद्यपि । स्त्रीत्वे टाप्प्राप्तावपि 'समासवच्च बहुल'मित्युक्तेर्ह्रस्वः ॥

अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् (८. १. १३)

अकृच्छ्रेऽर्थेऽनयोर्वा द्वे कर्मधारयवच्च तत् ।
प्रियप्रियेण गच्छन्तः प्रापुः सुखसुखेन ते ॥

विकल्पात् प्रियेण सुखेनेत्यपि । अकृच्छ्रेणेत्यर्थः ॥

यथास्वे यथायथम् (८. १. १४)

यथायथं भागान् गृह्णीध्वम् । यथास्वमित्यर्थः ॥

---

१. 'सवत्सभे,' केरलवर्मदेवपाठः

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु (८. १. १५)

रहस्ये वाच्ये मर्यादादिषु च विषयेषु द्विशब्दस्य द्विरुक्त्या द्वन्द्वशब्दो निपात्यते। स चाव्ययमिति शृङ्गारे। क्रियाविशेषणमित्यन्ये। द्वन्द्वं मन्त्रयन्ते। रहस्यमित्यर्थः। मर्यादावचनं व्यवस्थोक्तिः। स्वस्वैव द्वन्द्वं रमन्ते परावताः। द्विवर्गतया पृथगवस्थानं व्युत्क्रमणम्। तिष्ठन्ति द्वन्द्वं योधाः।

यज्ञपात्रप्रयोगे तु द्वन्द्वं पात्राणि सादयेत् ॥

अभिव्यक्तिः प्रसिद्धिः स्याद् द्वन्द्वं पर्वतनारदौ।

'द्वन्द्वः कलहयुग्मसमासादिषु' (स० ७. ३. २४) इति च भोजः ॥

इति श्रीमत्केरलभूवलयभूषणदेवनारायणधरणीपतिकरुणाशरणेन नारायणचरणपरायणेन नारायणकविना विरचिते प्रक्रियासर्वस्वे सुब्विधिखण्डः ॥

---

विद्वांसो विदितं हि सर्वमिति न द्रक्ष्यन्ति मन्दाः पुनः
प्रारभ्याधिकमार्गदर्शनपरिश्रान्ता विरंस्यन्ति च।
अन्ये मत्सरिणः कथामपि च नो कुर्युः किमेतैः क्षतं
यन्मद्बुद्धिविशुद्धये च नृपतेर्मोदाय चेदं कृतम् ॥

॥ शुभं भूयात् ॥

## APPENDIX I

## सूत्रानुक्रमणी ।

1437

1437

## APPENDIX II

# APPENDIX III

## प्रक्रियासर्वस्वे स्मृतग्रन्थादि ।

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २ | विभक्तिरिति सप्तम्यर्थो विवक्षितः | ... | नीवीकारः |
| | परिप्रती अपि सप्तम्यर्थौ | ... | माधवः |
| ,, | ... | .... | ,, |
| ३ | तिष्ठद्गु ... चान्यसमासः | | भोजः |
| ,, | आतिष्ठाद्गवि ... स्यात् | | शङ्करः |
| ६ | लूनलूयमान ... विभक्तिः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | खले ... बुसेन च | ,, | ,, |
| ,, | सुवि ... समया | ,, | ,, |
| ,, | सुविनि ... समाः | ,, | ,, |
| ,, | ... | ... | हरः |
| ,, | ... | ... | नाथः |
| ,, | समंभूमि ... पदार्थे | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | भूमेः पदातेश्च समत्वमेवार्थः | .... | रामः |
| ,, | समभूमि समपदाति | ... | हरः |
| ,, | ... | ... | रामः |
| ,, | प्राह्णरथमृगदक्षिणाभिः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ७ | ... | ... | हरः |
| ,, | संप्रत्यसं ... वामेषु | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | संप्रतिशब्दो युक्तामत्यर्थेऽपि | ,, | हरः |
| ,, | पारेमध्ये...वा | (सरस्वतीकण्ठाभरणम) | भोजः |
| ८ | शरद्विपा • चतुर्भ्यः | ,, | ,, |
| ,, | जराया जरस् च | ,, | ,, |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ८ | प्रतिपरसमनुभ्योऽक्षणः | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | परशब्दस्तु तत्पुरुष एव | .... | रामहरी |
| १० | .... | .... | भोजः |
| ११ | .... | .... | रामाद्याः |
| ,, | .... | .... | भोजः |
| १२ | यानकपूजक....भर्त्रादिभिश्च | ( सरस्वतीकण्ठाभरणम् ) | ,, |
| ,, | रथपत्ती गणकेन | ,, | ,, |
| ,, | सर्वमहानित्यादौ स्यात | .... | ,, |
| १३ | धान्य....समासः | .... | वामनः |
| ,, | .... | .... | वृत्तिकृत् |
| ,, | .... | .... | कुमारिलः |
| ,, | .... | वृत्तिः | .... |
| ,, | हर्म्योपरि....स्यात् | .... | भोजः |
| ,, | नाम्नो....अत्रासमास एव | .... | हरः |
| १४ | .... | .... | रामः |
| ,, | जीविकार्या तृचापि | .... | ,, |
| ,, | सायाह्न....रात्रादयः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | षष्ठीसमासोऽप्यत्रेष्टः | .... | हरः |
| १५ | तलाग्राद्यश्च | .... | भोजः |
| १६ | पात्र....चान्यसमासः | ( सरस्वतीकण्ठाभरणम् ) | ,, |
| ,, | गेहगोष्ठी....प्रगल्भैः | ,, | ,, |
| ,, | उदुम्बरः....मुपमायाम् | ,, | ,, |
| ,, | अवट....मण्डूकाभ्याम् | ,, | ,, |
| ,, | उदपान.. मण्डूकः | .... | माधवः |
| ,, | नगरं काकादिभिः | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | गेहे....निरीक्षतायाम् | ,, | ,, |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १६ | पितरि....क्षियायाम् | (सरस्वतीकण्ठाभरणम्) | भोजः |
| १७ | गर्भः....नौचित्ये | ,, | ,, |
| ,, | कर्ण....भ्याम् | ,, | ,, |
| १८ | दुर्दुरूटः | .... | ,, |
| ,, | पापाणक ....कुत्सितैः | ( सरस्वतीकण्ठाभरणम् ) | ,, |
| १९ | .... | .... | हरः |
| ,, | .... | .... | नाथः |
| २० | कृतापकृता....मुपसंख्यानम् | .... | .... |
| ,, | भुक्तविभुक्तम् | (वृत्तिः) | .... |
| २१ | .... | ( टीकासर्वस्वम् ) | .... |
| ,, | पादमिश्र....दिभिः | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| २२ | जातिर्जात्या | ,, | ,, |
| ,, | मयूरच्छात्रौ....समासः | ,, | ,, |
| ,, | काम्बोजयवनौ मुण्डेन | ,, | ,, |
| ,, | .... | .... | रामः |
| ,, | एही....नपुंसकत्वं च | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| २३ | अपेहि च ...क्रियायाम् | ,, | |
| ,, | प्रेहि....वाणिजाभ्याम् | ,, | |
| ,, | प्रोह....द्वितीयया | ,, | |
| ,, | कृन्धि .. चूडाभिः | ,, | |
| ,, | कृन्धि .... कृन्तविचक्षणा | .... | रामहरौ |
| ,, | .... | .... | हरः |
| ,, | आहर....वनिताभिः | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | आख्यान....सातत्ये | ,, | ,, |
| ,, | उद्धरो ....सृजाभ्याम् | ,, | ,, |
| ,, | पच....नेः | ,, | ,, |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| २४ | उन्मृजावमृजेन | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | इह द्वितीये....निश्चप्रचादयः | ,, | ,, |
| ,, | .... | ... | शङ्करः |
| ,, | अहि ....कर्तरि | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | स्नात्वा....श्यामादयः | ,, | ,, |
| ,, | स्वगृह....प्रोष्यपापीयान् | ... | शङ्करः |
| ,, | आचोपचोच्च....भयानि | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | ... | .... | वामनः |
| २५ | तदन्य....त्वमानुषः | शृङ्गारः | .... |
| २६ | ऊर्युररी चाङ्गीकारे | ( सरस्वतीकण्ठाभरणम् | भोजः |
| ,, | ऊरी च | (मुरारिपञ्चिका) | .... |
| ,, | पांपी....विस्तारे | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | पार्दाली....हिंसायाम् | ,, | ,, |
| ,, | गुलुगुधा पीडायाम् | ,, | ,, |
| ,, | आङ्की....विकारे | ,, | ,, |
| २७ | सजूः सहार्थे | ,, | ,, |
| ,, | वषट्....संप्रदाने | ,, | ,, |
| ,, | प्रादुराविषौ प्राकाश्ये | ,, | ,, |
| ,, | .... | .... | माधवः |
| ,, | .... | .... | स्वामी |
| २८ | साक्षान्मिथ्या....च्व्यर्थे | ( सरस्वतीकण्ठाभरणम ) | भोजः |
| २९ | अर्थेऽनौ....नमसश्च | ,, | ,, |
| ,, | .... | .... | हरः |
| ३० | स्वती पूजायाम् | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | दुर्निन्दाकृच्छ्रार्थयोः | ,, | ,, |
| ,, | आङीषदर्थाभिव्याप्त्योः | ,, | ,, |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ३० | प्रादयो गताद्यर्थे प्रथमया | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | अत्यादयः....द्वितीयया | ,, | ,, |
| ,, | अवादयः....तृतीयया | ,, | ,, |
| ,, | पर्यादयो....चतुर्थ्या | ,, | ,, |
| ३१ | निरादयः....पञ्चम्या | ,, | ,, |
| ,, | राजदन्त....परम् | ,, | ,, |
| ,, | बिम्बोष्ठ .... वा | ,, | ,, |
| ३५ | गौर्याः ... गौरिषक्थम् | .... | माधवः |
| ,, | स्वार्यर्थे ... व्यर्थम् | .... | हरः |
| ३६ | आयुध .... बाहुल्यमेव | .... | शङ्करः |
| ३७ | ... | .... | हरः |
| ३९ | बहूनां समासे ... नियमो न | (शृङ्गारः) | ... |
| ,, | भूमाद्यर्थेष्वपि | .... | रामः |
| ४० | अनूङिति षष्ठ्यर्थे प्रथमा | .... | हरः |
| ,, | विदितभक्तिं .... निर्वाहः | .... | रामः |
| ४१ | अपूरणी .... अत्र न | .... | हरः |
| ४२ | अव्ययादेः ... डाच् | .... | रामः |
| ४३ | युधि परस्परकरणे द्योत्य एव | (भोजसूत्रम्) | ... |
| ,, | युद्धनियमो नास्ति | (शृङ्गारः) | ... |
| ४४ | नन्द्यादिभ्यः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | गड्वादिभ्यो वा | ,, | ,, |
| ,, | ... | ... | शङ्करः |
| ,, | आहिताग्नि .... वा | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | पुत्रहतः .... दन्तादिषु | .... | माधवः |
| ४५ | सुमन्त्रनेत्रेण रथेन | ... | भट्टिः |
| ४६ | वेः खुखग्राः | (सरस्वतीकण्ठाभरणम्) | भोजः |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ४६ | भद्रपद | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | ... | .... | हरः |
| ४७ | अन्यत्राप्यस्ति | (वृत्तिः) | ... |
| ,, | मन्दाल्पाभ्यां च मेधायाः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | ,, | .... | वर्धमानः |
| ,, | वाली .... हिंसकमात्रेऽस्ति | .... | हरः |
| ,, | द्वेर्दण्ड .... क्रियायाम् | (सरस्वतीकण्ठाभरण ) | भोजः |
| ४८ | उभोभय .... कर्णेभ्यः | ,, | ,, |
| ,, | बाहोर्लुक् | ,, | ,, |
| ,, | संहृत ... पद्यादयः | ,, | ,, |
| ,, | प्रोष्ठपदि .... कर्णि च | ,, | ,, |
| ,, | .... | ... | हरः |
| ४९ | घृतधनुषि .... अयुक्तम् | ... | वामनः |
| ,, | आगन्तोर्वा | ... | भोजः |
| ,, | हृद् दुर्लभः | ... | वामनः |
| ५० | ... | ... | भोजः |
| ,, | कुम्भजालैक .... दासीभ्यः | (सरस्वतीकण्ठाभरणम्) | ,, |
| ,, | विष्णुकृष्ण .... निरष्टाभ्यश्च | ,, | ,, |
| ५१ | .... | ... | ,, |
| ,, | चकारात्सुदतीत्याद्यपि | ... | वामनः |
| ५२ | उरःसर्पि .... शालिभ्यः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | पुम .... एकत्वे | ,, | ,, |
| ,, | नञोऽर्थात् | ,, | ,, |
| ५३ | अनावन्तस्यापि ह्रस्वो वा | (कौमुदी) | ... |
| ५४ | न नरनारायणादिषु | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ५५ | ... | ... | हरः |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ५७ | कारव: | (सरस्वतीकण्ठाभरणम्) | भोज: |
| ,, | गवाश्च .... एडकानि | ,, | ,, |
| ,, | कुब्ज .... भागवतानि | ,, | ,, |
| ,, | शाटी .... तृणोपलानि | ,, | ,, |
| ५९ | रुद्राविल्येकशेषोऽन्वेष्य: | .... | वामन: |
| ६० | पिता च .... पितर: | (शृङ्गार:) | ... |
| ,, | स च यश्च तौ | .... | भाष्यकृत् |
| ६३ | पथ: पन्थश्च मार्ग: स्यात् | .... | ... |
| ,, | प्रतिसामादौ .... यथासम्भवम् | ... | हर: |
| ,, | मुरार्युक्त: .... चिन्त्य: | ... | माधव: |
| ,, | गवाक्षे च नित्यमवङ् | (कौमुदी) | ... |
| ६४ | रात्रिपर्यायो वाहश्शब्द: | ... | नाथ: |
| ,, | परोपद्रवकर्ता .... गोष्ठश्च | ... | स्वामी |
| ,, | सन्तमसो देश: | ... | शङ्कर: |
| ,, | प्रशस्यार्थात् .... एव | ... | हर: |
| ६५ | अत्यन्तं रहस्तमरहसम् | ... | ,, |
| ,, | द्विस्तावोऽग्नि: | ... | ,, |
| ६६ | .... | (वृत्ति:) | ... |
| ६८ | गोषुचरो वर्षासुचर: | ... | हर: |
| ७१ | सर्वं यथासम्भवम् | ... | ,, |
| ,, | जहाहि प्रमदावनम् | ... | भट्टि: |
| ७२ | .... | ... | माधव: |
| ७३ | सर्वत्र बहुव्रीहि: कर्मधारयो वा | ... | हर: |
| ७४ | परस्त केचिद् .... नोभयो: | (कौमुदी) | ... |
| ७५ | वर्णागमो निरुक्तम् | ... | ... |
| ७६ | .... | ... | स्वाम्यादय: |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ७६ | जपादीनां पो वः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | अश्वति ... नक्षत्रम् | ... | हरः |
| ७७ | ... | ... | भोज राट् |
| ,, | ... | ... | भागुरिः |
| ७८ | छान्दसेष्वेव सफलः | ... | हरः |
| ७९ | ,, | ... | भोजः |
| ,, | ... | ... | हरः |
| ,, | ... | (वृत्तिः) | ... |
| ८२ | नदीतरणकुशलो ....नदीष्णः | ... | शङ्करः |
| ,, | कुशलमात्रेऽप्यस्ति | ... | हरः |
| ८३ | सुदुर्निभ्यः सामसेधसन्धेः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ८४ | परिस्कन्दः परिभूतः | ... | शङ्करः |
| ८५ | नृनम | ... | माधवः |
| ,, | नृत्तनर्तन .... नयनादीनां | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | नेन्द्र .... विवक्षितत्वात् | ... | वामनः |
| ८७ | .... | (कौमुदी) | .... |
| ८९ | .... | ... | महिमा |
| ,, | .... | ... | हरः |
| ९१ | क्षिपका .... मेनकादीनाम् | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ९४ | .... | (कौमुदी) | ... |
| ९६ | धेटः स्वश्येव ङीप् | ... | माधवः |
| ९७ | गौरीत्यप्येवमेव | ... | स्वामी |
| ,, | वृद्धत्वात्पूर्वं प्रथमवयः | ... | हरः |
| १०० | ... | ... | माधवः |
| १०१ | ... | ... | वामनः |
| ,, | ... | ... | मुरारिः |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १०२ | ... | ... | माधवः |
| ,, | ... | ... | हरः |
| ,, | ... | कौमुदी | ... |
| १०३ | वस्त्रवर्जितः .... ग्राह्यः | ... | भोजः |
| १०४ | .... | ... | नाथः |
| १०५ | .... | ... | भोजः |
| १०६ | भूशब्दादप्राणि .... सुभ्रूः | ... | शङ्करः |
| ,, | हरितायत्तरूमशोकवनिकां | ... | भट्टिः |
| ,, | .... | ... | शङ्करः |
| ,, | कोमलोरू .... ऊरूत इत्यूङ् | .. | नाथः |
| १०७ | नृनरयोर्वृद्धिश्च | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | भजडक .... मूषिकेभ्यः | ,, | ,, |
| ,, | बालहोड .... त्रिलातेभ्यः | ,, | ,, |
| ,, | कन्यकनिष्ठ .... मुग्धेभ्यः | ,, | ,, |
| ,, | पूर्वापहाना .... नस्य च णः | ,, | ,, |
| ,, | .... | ... | माधवः |
| ,, | सम्भस्त्राजिन .... फलात् | (सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | सत्प्राक्काण्ड .... पुष्पात् | ,, | ,, |
| ,, | मूलान्नञः | ,, | ,, |
| १०८ | .... | ... | माधवः |
| ,, | ... | कौमुदी | .... |
| ,, | .... | ... | माधवः |
| ,, | कुन्द्देवविड्भ्याम् | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ,, | उष्णिहो वा | ,, | ,, |
| ,, | गौरपिशङ्ग ... पुष्कलेभ्यः | ,, | ,, |
| ,, | बृहदुरश्चोर ... गायत्रेभ्यः | ,, | ,, |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १०८ | मत्स्यमनुष्य ... अनडुद्भ्यः | (सरस्वतीकण्ठाभरणम् | भोजः |
| ,, | नटपाटक ··· कुटेभ्यः | ,, | ,, |
| ,, | धातककेतक ... अतसाढकेभ्यः | ,, | ,, |
| ,, | कदलगुलूच ··· व[illegible]केभ्यः | ,, | ,, |
| ,, | कूश्माण्ड ... स्थालेभ्यः | ,, | ,, |
| १०९ | यूपसूप ·· काकणेभ्यः | ,, | ,, |
| ,, | द्रोणबृस ··· वैजयन्तेभ्यः | ,, | ,, |
| ,, | काकादन ··· आग्रहायणेभ्यः | ,, | ,, |
| ,, | एषणात् करणे | ,, | ,, |
| ,, | सुमङ्गलाच्च संज्ञायाम् | ,, | ,, |
| ,, | पीनाच्च | ,, | ,, |
| ,, | रेवद्रोहिणाभ्यां नक्षत्रे | ,, | ,, |
| ,, | कटाच्छ्रोण्याम् | ,, | ,, |
| ,, | ... | .... | माधवः |
| ,, | ... | .... | श्रीहर्षः |
| ,, | ... | टीकासर्वस्वम् | .... |
| ,, | बहुपद्धति ··· पुराणाहन्भ्यः | (सरस्वतीकण्ठाभरणम्) | भोजः |
| ११० | चान्द्रभागादनद्याम् | ,, | ,, |
| ,, | शक्तेः शस्त्रे | ,, | ,, |
| ,, | न क्रोड ··· घोणादिभ्यः | ,, | ,, |
| ,, | क्रोडेति डाबन्तस्य ··· | .... | माधवः |
| ११३ | .... | ... | ,, |
| ,, | ... | न्यासभाष्यादि | ... |
| ,, | नद्या अपि ··· नदीमास्ते | प्रसादः | ... |
| ११४ | भक्षयत्यमात्यानरीन् राजा | कौमुदी | ... |
| ,, | अयक्रन्द ··· न | ,, | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
| --- | --- | --- | --- |
| ११४ | ... | .... | भोजः |
| ,, | ... | ... | माधवः |
| ,, | त्यजेर्न | .. | हरः |
| ११६ | ... | .... | रामः |
| ,, | ... | शृङ्गारः | ... |
| ,, | ... | ... | हरः |
| ,, | ... | ... | भोजराट् |
| ११७ | ... | ... | भोजः |
| ११८ | ... | ... | ,, |
| ,, | ... | कौमुदी | ... |
| ,, | ... | ... | भट्टिः |
| ,, | .... | वृत्तिः | ... |
| ,, | रिपोः कथमपि ... अपेरर्थः | .... | शङ्करः |
| ११९ | प्रकृति ... आत्मादिभ्यः | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | न्यक्ष ... क्रियाविशेषणे | ,, | ,, |
| ,, | सुखदुःखादिभ्यो वा | ,, | ,, |
| ,, | समविषमादिभ्योऽधिकरणे | ,, | ,, |
| ,, | द्विद्रोण ... वीप्सायाम् | ,, | ,, |
| १२० | हानिवदाधिक्यमप्यङ्गानां विकारः | ... | वामनः |
| ,, | मुखेन भीमा राक्षसी | ... | भट्टिः |
| ,, | अत्र प्रत्यभिज्ञार्थः | ... | ,, |
| ,, | अपेक्षते इत्यर्थः | ... | नाथः |
| १२२ | निगूह्यमानस्याभावोऽत्र ज्ञाप्यते | ... | शङ्करः |
| ,, | ... | ... | भोजः |
| १२३ | कवयेऽनुगृह्णाति प्रतिगृह्णाति वा | ... | भट्टिः |
| १२४ | कर्मण उपमानत्वे एव | ... | आपिशलि-भोजौ |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १२६ | ऋते द्वितीया च | ( सरस्वतीकण्ठाभरणम् ) | भोजः |
| ,, | आरभ्यार्थयोगेऽपि | मुग्धबोधः | ... |
| १२८ | सर्वनाम्नः .... स्युः | .... | कैयटमाधवौ |
| ,, | ततः पश्चात् | (महा)भाष्यम् | ... |
| १२९ | स्वाधिकरणात् .... चिन्त्यम् | ... | हरः |
| ,, | ... | ... | भोजः |
| ,, | ... | ... | भट्टिः |
| १३० | ... | शृङ्गारः | ... |
| १३२ | अत्र ··· केचित् | ... | शङ्करः |
| ,, | कर्तर्यपि वा | वृत्तिः | ... |
| ,, | ... | ... | हरः |
| १३३ | शेषविवक्षायां त्वेषु षष्ठी स्यात् | .... | ,, |
| ,, | शेषविवक्षया | ... | ,, |
| १३४ | तुलां यदारोहति ··· सहार्थे तृतीया | प्रसादः | ... |
| ,, | कर्मार्थतया ··· तृतीयापि स्यात् | .... | हरः |
| ,, | .... | ... | भोजः |
| १४३ | आतोऽनापः | ( सरस्वतीकण्ठाभरणम् ) | ,, |
| ,, | ... | ... | हरदत्तः |
| ,, | आदन्ताच्छसो नत्वं वा | कौमुदी | ... |
| १४६ | अतिलक्ष्म्यादिश्च .... वत् | ,, | ... |
| १४७ | एषु स्त्र्यत्यादित्युत्त्वं वेति केचित् | ,, | ... |
| १४८ | ... | ,, | ... |
| १४९ | ... | प्रसादः | ... |
| १५० | विशाखयोश्च ··· लोकेऽप्यस्ति | टीकासर्वस्वम् | ... |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १५४ | भीरोस्तु संबुद्धौ संज्ञापूर्वकत्वाद् गुणो न | ... | शङ्करः |
| ,, | ... | ... | माधवः |
| १५६ | ... | ... | ,, |
| १५८ | ... | प्रसादः | ... |
| ,, | ... | ... | माधवः |
| ,, | .... | कौमुदी | .... |
| १६३ | .... | ... | माधवः |
| ,, | पूष्णो ङिर्ङिच्च | ... | वोपदेवः |
| ,, | ... | ौमुदी | ... |
| १६५ | उपसर्जनत्वे प्रियपञ्चवत् तत्रात्वं वा | ... | रामहरौ |
| ,, | कुत्वं न | वृत्तिः | ... |
| १६९ | ... | कौमुदी | |
| १७५ | रक्षतेः कलोपो न | मुग्धबोधः | कौमुदी |
| १७७ | .... | अमरव्याख्या | |
| १८२ | .... | ... | भाष्यकृत् |
| १८३ | .... | न्यासः | |
| ,, | .... | ... | हरदत्त |
| ,, | .... | .... | कैयटः |
| १८५ | स्वबाहुप्रायेण क्षपितरिपुरास्ते स भगवान् | ... | ... |
| ,, | प्रज्ञा निकामं जितशात्रवोऽयम् | ... | ... |
| १८६ | .... | ... | भोजः |
| ,, | .... | ... | स्वामी |
| १८८ | .... | ... | शङ्करः |

| पृष्ठम् | वाक्यम् | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| १९१ | .... | ... | माधवाद्याः |
| ,, | वाक्यस्यापि दृश्यते | ... | ... |
| ,, | पदैकदेशस्यापि | ... | ... |
| ,, | पूर्वप्रथमयोरतिशये द्वे स्तः | ... | .... |
| १९२ | ... | शृङ्गारः | ... |
| ,, | द्वन्द्वः कलहयुग्मसमासादिषु | (सरस्वतीकण्ठाभरणम्) | भोजः |